# स्वप्नविज्ञानम्

(मौलिक दार्शनिक रचना)


लेखकः

## रामस्वरूप शास्त्री

व्याकरणतीर्थः, न्यायतीर्थः, व्या० आचार्यः,
साहित्यशास्त्री, विद्याभूषणः,
भूतपूर्व अध्यक्षः, संस्कृत-हिन्दीविभागे
अलीगढ़स्थ विश्वविद्यालये

# समर्पणम्

विद्यानुरागिणाम् माननीयवराणाम् महानुभावानाम् श्रीमताम् कर्नल बी० एच्० जैदीतिशुभाभिधेयानाम् अलीगढ़स्थ-विश्वविद्यालयस्योपकुलपतीनाम् करकमलयोः सातिशयमान पुरःसरम् समर्पणम् ।

रामस्वरूप शास्त्री

# कृतज्ञताप्रकाशः

विद्याप्रेमविलसितस्वान्ताः महामानसाः संस्कृत हिन्दी भाषोत्कर्षदायिनः विदुषां शुभाकांक्षिणः अलीगढ़स्थविश्वविद्यालये संस्कृत-हिन्दी विभागे द्वात्रिंशद् वर्ष परिमितं कालं मदीयाध्यापन सेवामाद्रियमाणाः श्रीमन्तः कर्नल बी० ऐच्० जैदीतिशुभनामधेयाः अलीगढ़स्थविश्वविद्यालयस्योपकुलपतयः सहर्षं सानुग्रहं स्वकीय धनव्ययेनेदं पुस्तकं विदुषां हिताय मुद्रापितवन्तः। तेषां हार्दिकी विशिष्टतरा कृतज्ञता वहुविध मन्यते च तदीय कृतज्ञताभारः सादरं सविनयं समुपोह्यतेतराम् नितराम् मया।

वाराणसीस्थ विश्वविद्यालये हिन्दी विभागाध्यक्षाणाम् आचार्यवर्याणाम् श्रद्धेयानाम् महानुभावानाम् श्रीमताम् डा० हजारीप्रसाद द्विवेदिनाम्, प्रेरणया उत्साहप्रदानेन च पुस्तकमिदं प्रकाशयितुं सोत्कण्ठोऽहमासम्। तेषां प्रचुरां श्रेयस्करीं कृतज्ञतां सादरमावहामि।

ये सुरगवीगौरवं वर्धयन्तः सारस्वतं सारं प्रकाशयन्तः मान्याः विपश्चिदपश्चिमाः सारवत्तरां बुधवृन्द वन्दिताम् स्वीयां सम्मतिं प्रदाय मां कृतार्थं कृतवन्तः। तेषां भूयसीं श्रेयसीं कृतज्ञतां सवहुमान मादधामि।

अपिच भारतप्रकाशनमन्दिरस्याध्यक्षाः पं० बद्रीप्रसाद शर्माणः स्वीयमुद्रणयंत्रालये सहानुभूति पूर्वकं सहर्षं पुस्तकमिदं प्रकाशंनीतवन्तः। अनल्पाः मुद्रणत्रुटयः तेषांप्रयत्नेननिवारिताः कृतज्ञतापूर्वकं तेभ्यो धन्यवादाः सन्तु।

रामस्वरुप शास्त्री

Mahamahopadhyaya Swastika Bhawan,
Dr. P. K. Acharya, I. E. S. (Retd.) George Town,
B. A. Hons., M. A., Ph. D., D. Lit. (London) Allahabad.

27-1-59

The Svapna Vijnana by the veteran scholar Pandit Ram Swarup Shastri is a rare treatise in Sanskrit dealing with original philosophical thoughts. Shastriji has named it fittingly 'A Science of Dream.' Indeed only the 'Dreamers' can bring out such a 'Science.'

For a similar treatise in Hindi the Hindi Sahitya Sammelan of Prayag has awarded the 2012 Samvat Manglaprasad prize of Rs. 1200 (cash). It is a pity that there is no such prize for Sanskrit Essays like the Svapna Vijnana, which is in no way inferior to Pt. Udayvir Shastri's Sankhya Darshan Ka Itihasa, which has won the Manglaprasad prize.

Pandit Ram Swarup Shastri's treatise deserves publication and wide circulation and is sure to be highly appreciated by philosophers.

Sd. P. K. Acharya.

Dr. Siddheshwar Varma, Ministry of Education India,
Spl. Officer Hindi. New Delhi.

# REVIEW

Svapna-vigyanam (in Sanskrit, being a manuscript), by Shri Ram Swarup Shastri, Aligarh.

It is refreshing to see--which is a rare sight in Sanskrit—this synthetic presentation of the phenomena of Dreaming, which this interesting work in Sanskrit is. For centuries, Sanskrit authorities have not cared to handle single minor concepts like dream, intellect, memory etc., synthetically and comparatively, though on major concepts like Unity, Realisation etc, synthetic presentations are copiously available.

After a lucid explanation of the various human states like waking etc. the author defines (page 7) a dream as that consciousness of an object which arises when the functioning of the senses has been withdrawn and which originates from the impressions of the waking state. These immediate conditions of the dream, however, are further traced to wider principles, e. g. to the मिथ्यात्व of the Vedanta and to the अविद्या of the Vaisesika. A very lucid and interesting exposition of the phenomena of dreaming, on the basis of Vaisesika then follows (pages 10-12.) But, above all, the treatment of this phenomenon from the standpoint of the Sankhya is by for the most interesting, and has been happily expounded by some stories (pages 13 ff.). His treatment from the Yoga standpoint brings out a wealth of psychological terms in this connection. (page 62 ff.)

But the writer is not satisfied with a treatment merely from the view point of the established schools of philosophy. He goes much further and draws on material from poets, folklore and Sanskrit tradition (page 21 ff.)

The language of the work is highly ornate and rhetorical throughout.

A great flaw of the work is that it is meagrely documented and not up-to-date. If some arrangement could be made to revise and improve the work, it would be an important contribution to Sanskrit literature, in view of the paucity of such works in the language.

Sd. Siddheshwar Varma

1. 5. 1959.

Railway Station, Banaras Cantt

Post & Telegraph Office Banaras Hindu University

# Banaras Hindu University

Banaras—16-3-1959

आचार्य रामस्वरूपजी रचित स्वप्न-विज्ञान नामक पुस्तक देखी। अपार हर्ष हुआ। इस स्वप्न-विज्ञान में स्वप्नरूप सारे ही जीवन का विज्ञान देखने को मिल गया। आत्मा क्या है? स्वप्न क्या है? स्वप्न की विधाएँ कितनी हैं? इन सभी समस्याओं पर अनोखा प्रकाश डाला गया है। पुस्तक के पन्ने-पन्ने पर आचार्यजी की सिद्धहस्तता की छाप है और पुस्तक की प्रत्येक पंक्ति विज्ञान के चमत्कार से पूरी तरह चर्चित है। मैं आशा करता हूँ कि पुस्तक का पंडित वर्ग में आदर होगा।

मैं इस ग्रन्थ को प्रस्तुत करने पर आचार्यजी को हार्दिक बधाई देता हूँ।

सूर्यकान्त

विद्याभास्कर, वेदान्तरत्न, शास्त्री, व्याकरणतीर्थ, एम० ए०, एम० ओ० एल०, डी० लिट, डी० फिल०

अध्यक्ष – संस्कृत–पाली–विभाग,

काशी हिन्दू विश्वविद्यालय

Dr. Narendra Nath Choudhari
M. A. D. Lit,
Professor & Head,
Department of Sanskrit,
University of Delhi.

6–c, Maurice Nagar,
Delhi—8
Dated 2–5–1960

श्रीमन्तः शास्त्रिमहोदयाः !

भवतां पत्राणि प्राप्तानि। स्वप्नविज्ञानस्य सूचीपत्रमपि दृष्टम्। भवद्भिः खलु ग्रंथस्यास्य विचारः सम्यग्विहितः। दर्शनानां मतवादस्य विचारणाप्यत्र वर्त्तते। इदं स्वप्नविज्ञानं खलु सर्वथा मुद्रणोपयोगि विद्यते। एतद्धि लोकहिताय ध्रुवं भविष्यति। वेदपुराणादिमतानामत्र विवेचनं भवतां शास्त्रनिष्णातत्वं सुतरां समुद्घोषयति।

निवेदको
भवदीयो नरेन्द्रनाथः।

# प्राक्कथनम्

विदितमेवैतद् वर्तते ऽतिमतिमतां विपश्चिताम्, यद् विधिविरचिते समस्तेऽस्मिन् जगति प्राणिनिकाये कायिनां मध्ये मानवीयो देह एव प्राधान्यमुपयाति। येन धर्मार्थकाममोक्षाणां चतुष्टयं सम्पाद्यते समुपार्ज्यते च । तत्राविभक्तिशक्तिमन्तमात्मानमधिश्रित्यैव शरीरान्तर्गतानि घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि निर्दिष्टानि सन्ति, गन्ध रसरूपस्पर्शशब्दान् स्वान् विषयान् यथाक्रमं ग्रहीतुं प्रभवन्ति। मनश्च मानसीं स्वीयां संकल्पविकल्पात्मिकां सृष्टिं स्रष्टुं कल्पते। हस्तपादादिमा अवयवा अपि तमाधृत्यैव स्वकीयानि नियमितानि कार्याणि विधातुं शक्नुवन्ति। इत्थमात्मनो ऽविकलसामर्थ्यसम्पन्नत्वं वैशिष्टयेन सिद्धमस्ति। तस्य च चत्वारः पादाः विश्वतैजसप्राज्ञशिवाद्वैताभिधाना यथाक्रमं जाग्रत् शयन सुषुप्तितुरीयासु चतसृषु अवस्थासु वर्तमानाः माण्डूक्योपनिषदि प्रोक्ता व्याख्याताश्च साकल्येन। जाग्रदवस्थापन्नस्य स्थूलविषयभुजो विश्वस्य विषयस्तु प्रत्यक्षतः सुतरामेवावगम्यते। सुषुप्तेः तृतीयस्या अवस्थायाः प्राज्ञाभिधः पादस्तु अत्यल्पविषयकः क्वाचित्कः कादाचित्कः सर्वविधानन्दभुक् विषयभोगाऽनपेक्षी सूक्ष्मसूक्ष्मश्चास्तेऽतो याथातथ्येन निर्वक्तुम् न क्षम्यते। तुरीयाया अवस्थायाः चतुर्थः शिवाद्वैताख्यः पादस्तु लौकिकमर्थं व्यवहृतिं च न स्पृशति स तु पारमार्थिकतत्वप्रसितः ब्रह्मानन्दमनुभवति। अतस्तद्विषयवर्णनस्य विहीनलौकिकार्थस्य वर्णनमफलमसुशकं चास्ति।

तैजसाह्वयस्य द्वितीयपादस्य तु भूयान् अनियमितो, ऽव्यवस्थितो, ऽनिश्चितश्च विस्तृततरो विषयो विद्यते। अपिच प्रामाण्याति

क्रमणादप्रमाणभूतो ऽनन्ताकारतां, विफलतां, सौख्यदातृतां, मसौख्यदातृतां च भजति । अतः स्वप्नस्थानस्य तैजसस्य द्वितीयस्य पादस्य स्वप्नरूपस्य कारणानि स्वरूपाणि परिणामाश्च वस्तुतो विवेक्तुं प्रदर्शयितुं स्पष्टयितुमर्ह्यन्त इति कृत्वा विरचितमिदं "स्वप्नविज्ञानम् ।" यद्यपि स्वप्नविषयं वर्णयितुं वर्धमानसूरि-प्रभृतिभिः सूरिभिः पाश्चात्यैर्विद्वद्भिश्च निर्मिता बहवो ग्रंथा उपलभ्यन्ते तथापि तेषां प्रामाण्येऽतिशयः संशयः समुद्भवति। अतो यथार्थ वक्तृभिराप्तैर्विहितबहुकालतपस्यैः कालत्रयवस्तुत-त्वालोचिभिर्महर्षिभिर्विरचितानि षड्दर्शनशास्त्राणि, छान्दोग्य-बृहदारायकमाण्डूक्यकठाद्या उपनिषदः, च पुम्भावमागताया वाग्देवतायाः स्वरुपेण भगवता महर्षिणा द्वैमपायनेन विरचितस्या-ग्निपुराणस्यैकोनत्रिंशदधिकद्विशततममध्यायं चाधृत्य स्वप्न विषयो-ऽविद्यात्मकोऽस्ति, इदं सप्रमाणमधिगमयितुम् अपि च आत्मा-स्वयंज्योतिर्मान् स्वप्रकाशस्वरुपः शुद्धोऽस्ति । स्वप्नश्च मायामयी मानसी सृष्टि मिथ्यात्मिकेति प्रथयितुम्मेऽयं प्रयास इति सुधियो विभावयन्तु इतिशम् ।

जयगंज, अलीगढ़ रामस्वरूपः

ता० १५-३-६०

# स्वप्न-विज्ञानम्

## विषय-सूची

शुद्धिपत्रम् अन्ते संलग्नमस्ति ।

ओम् गौरीशंकराभ्याम् नमः

# स्वप्नविज्ञानम्

षड्दर्शनानां वृहदारण्यककठछान्दोग्यमाण्डूक्योपनिषदाम् अग्निपुराणस्य च सिद्धान्तेनानुमतम्।

मायातीतं सदानन्दं सगुणं निर्गुणं महः।
वन्देऽहंचिन्मयं नित्यं त्रिलोकीशरणं शिवम् ॥

अथ खल्वपरोक्षं हि विदुषां शेमुषीजुषां विदितवेदितव्यानां कृतकर्तव्यानां समुचितसुकृतानान्निखिलवस्तुतत्वालोचिनां सदसद्विवेकिनाम् यत् विधातुर्विविधवैदग्धी सुविधिरचनारचिते सप्रपञ्चेऽस्मिन् प्रपञ्चे, ह्यकारणकं किञ्चिद प्युद्भवितुं शक्नोति इति हेतोः निखिलमपि जगत्सकारणकं विद्यते, तदन्तर्गतं वस्तुजातं जडं सचेतनं चेत्युभयप्रकारं साकारन्निराकारं सप्रसारन्निष्प्रसारं स्तोकप्रचारमस्तोकप्रचारञ्च सन्निमित्तकारणजन्यमवश्यमेवांगीकर्तव्यम् नियमतस्तदपेक्षितत्वात्। तत्र सचेतन सतत्वानां तत्वानां मध्ये नानाविधकर्मोपार्जितानि वहुविधयोनिगतानि शरीराणि सन्ति। तन्मध्ये मानवदेहाः प्रधानतां समुपयान्ति। तदाधारमवलम्ब्यैव सुखं दुःखं चावैकल्येन साशयमनुभवितुमर्हति जनः। कमपि पदार्थमीप्सोर्वा जिहासोः प्राणिनः ईप्सितं वा जिहासितमर्थमधिकृत्य तदुपायरूपा चेष्टा च शरीर एव जायते। शरीरानुग्रहानुगृहीतानीन्द्रियाणि आत्मनः सुखदुःखनिदानानि सन्ति,

साध्वसाधुषु स्वार्थेषु प्रवर्तते मानससम्बन्धातिसहकारात्। इन्द्रियार्थसन्निकर्षाज्जातयोः सुखदुःखयोः संवेदनञ्च शरीरे एव व्यवह्रियते। तत्तद्भेदभिन्नानां तेषां तेषां शुभानामशुभानांचनिकृष्टानां मध्यमानामुत्कृष्टानां च कर्मणां तानि तानि बहुप्रभेदभिन्नानि नीचानि समानि महान्ति अप्रियाणि प्रियाणि अमंगलमंगलरूपाणि दुःखादुःखरूपाणि च फलानि तत्तद्भोगरूपाणि भोक्तुम् भोगायतनं शरीरमेवास्ति। परममहता प्रयत्नेनापि लब्धुमशक्यो मानुषीयो देहः। साम्प्रतन्तु अतिसौलभ्येन लब्धः अतोऽवश्यमेवोद्युज्यतां सतोऽसतश्च लौकिकस्यालौकिकस्य च ज्ञानमयस्याज्ञानमयस्य वस्तुनः स्वरूपं याथ्यातथ्येनावगन्तुं परीक्षितुं च अन्यथाऽस्य देहस्य नैष्फल्यं प्रसज्येत।

यथा लोहमये पञ्जरे पारसाख्यप्रस्तरस्थितिः चेत् पाषाणावस्था सम्पन्नैवस्यात्सा तदा विफला, यदस्त्येष तादृशस्य प्रस्तरस्य धर्मः अनेन संसर्गाल्लोहः कनकतामभ्युपैति। धर्मार्थकाममोक्षात्मकं यथाक्रमम् अवश्यकर्त्तव्य, प्राप्तव्य, भोगेच्छा, निःश्रेयस,रूपं पुरुषार्थचतुष्टयं सम्पादयितुम् मूलभूतमेतदेव शरीरं कल्पते। अनन्तजनिजन्यं दुःखन्निवारयितुमत्यन्तदुःखध्वंसरूपं कैवल्यं प्राप्तुम् चेदमेव साधनन्नान्यत्। आध्यात्मिकानि, आधिभौतिकानि, आधिदैविकानि चैतानि त्रिविधानि दुःखानि हातुं दुःखोद्विग्नमना मानवोऽवश्यमेव यतेत। यथा सूर्यानलसंतापसंतप्तः, शैत्योपेतोपचारं शीतलं वस्तु जलादिकमभिलष्यति। इत्थं च परमपरलोकसाधनं याथाथ्येन सतोऽसतश्च पदार्थस्य सम्यग्ज्ञानमेवावशिष्यते। ततोऽपि प्राक् लौकिकं परिज्ञानं साकल्येनापेक्ष्यते। अन्तरीयाणि

बाह्यानि अतीन्द्रियाणि स्थूलानि सूक्ष्माणि आत्ममनोयोगसंवेद्यानि च मनइन्द्रिययोगसंवेद्यानि सत्यस्वरूपाणि मिथ्यारूपाणि च जगत्संबन्धीनि सत्वानि सन्ति विविधानि। तत्र कतिचित् पदार्थाः प्रत्यक्षाः परोक्षाश्च यथार्थात्मकाः अपरे तु ते अकिञ्चित्करा असत्यात्मकाः सन्तः सत्या इव प्रतिभान्ति। स्वप्नोऽपि असन्नेवावभासते च विचित्रचारित्र्यचर्चामादधाति। तस्य बोधः न प्रत्यक्षः न चाऽप्रत्यक्षः न संशयात्मकः न विपर्ययात्मकः। अपि च वस्तुतः एक नामधेये बहुविधविचाचारचरिताधेये चैकस्मिन् वस्तुनि स्वप्नाभिधेये ऽस्यावैकल्येन स्वरूपस्थितिः न प्रियतया नाप्रियतया नो हिततया न चाहिततया न च सुखात्मतया नासुखात्मतया नोजड़तया पटुतया वा नापि यथार्थज्ञानरूपेणायथार्थज्ञानरूपेण चावगन्तुं विचारपथमारोढुं प्रभवति। अतोऽस्य स्वप्नस्य स्वरूपं याथातथ्येन निर्णेयमवश्यम्। यदयं निखिलानां ज्ञानजनिकाणानां पञ्चानामपि करणानामविषयो जागर्ति। अयं वस्तुतोऽसन्नपि अनेकानेकरूपेण भासमानः समानोऽसमानः विसमानः विशिष्टे चैकस्मिन् वस्तुधर्मिणि स्वरूपस्थितिन्नादधाति अतो यथामति मया विशिष्टाभियुक्तोक्तिमवलम्ब्य स्वप्नविज्ञानन्निदर्श्यते। कथमस्योत्पत्तिः किं हेतुको ऽयं किन्चात्र वैशिष्ट्यं किं स्वरूपोऽयं किमर्थं चास्यानेकविधाभिन्ना विशिष्टा अविशिष्टा विमर्शपदार्हाः विवेकपदानर्हाश्च ते ते आकाराः साकारतामुपदधत इव भासंते। तदादौ प्रथममुत्पत्तिरेतदीया निगद्यते। बाधनात्मकं वाऽबाधनात्मकं परिणामं दुष्कृतस्याथवा सुकृतस्यानुभवितुं वस्तुतत्वमवबोद्धुम् च प्रथमं साधनं देह एवाभिमतोऽस्ति प्राधान्यतोऽप्राधान्यतोऽपि इति निर्णीत प्रायमेवास्ति। देहान्तर्गताः स्वरूपसत्तया पार्थक्येन स्थिताः सर्वंसहाः सर्वक्षमाः सर्वविदः सर्वंकषा त्रय एव पदार्थाः सन्ति।

प्रथम आत्मा द्वितीयः पदार्थः मनः तृतीयः इन्द्रियाणि। आत्मा तावद्भिन्न एवास्ति शरीरेन्द्रियादिभ्यः। ज्ञानेच्छादीनामसाधारणकारणभूतः समवायिकारणात्मकोऽस्ति, आत्मा तावत्स्वरूपेण प्रत्यक्षतो नावगन्तुं शक्यः वहिरिन्द्रियाविषयत्वात्। अतः स इच्छा, द्वेष, प्रयत्न, सुख, दुःख, ज्ञानैरात्मगुणैरनुमातव्यः। एषां गुणानामात्मेतरेषां पृथिव्यादीनामगुणत्वं स्पष्टमेव प्रतिभाति। इच्छादीनां गुणत्वात्। गुणानां च गुणिसमवेतत्वमवश्यं वाच्यम्। अतथात्वे तु गुणानामभासमानता प्रसज्येत। अतः यत्रेमे इच्छादयः गुणाः समवायसम्बन्धेन वर्तन्ते सोऽवश्यं कश्चित् पदार्थं इति मन्तव्यमेव स च आत्मा इति नामक इत्येव सुवचम्। तद्यथा यादृशपदार्थस्य सन्निकर्षात्सुखमात्मोपलभते तादृशमेव तं पश्यन्नुपादातुमिच्छति इति स्फुटमेवेच्छाया आत्मगुणत्वम्। एवमेकस्य यादृशस्य दुखहेतोर्वस्तुनो दर्शनादनुभवाद् वा पुनस्तद्दर्शने भवति तत्र द्वेषः अतः द्वेषोऽपि आत्मगुणः सुखहेतुतया प्रसिद्धमर्थमनुभूय पुनस्तमादातुम् यतते जनः इत्थं यत्नोऽपि आत्मसमवेतः। सुखसाधनं वस्तु स्मृत्वा तद् ग्रहीतुमिच्छन् सुखं विन्दते। दुःखसाधनमनुभूय न तदुपैतुमीप्सति नोपलभते च तत्। एवं सुखदुःखेऽपि आत्मनो गुणाविति सिद्धम्। जिज्ञासमानः प्राणी वेवित्ते किमिदमिति स च विमृशन्नवबोधति तदिदमिति। एतच्च ज्ञानं जिज्ञासाविमर्शाभ्यामेककर्तृकं प्रतीयते। भवति चात्मनो लिंगम् येत्वभिदधति देह एवात्मा तेनैव तत्रैव च पूर्वोक्तानामिच्छादीनां सुतरां समुदयात् न तु एतद् व्यतिरिक्तः कश्चिदन्योऽर्थो विद्यते आत्मसंज्ञकः। तत्तुच्छतमन्न विचारास्पदमारोहति। मृतकदेहपिण्डे सत्यपि शरीरसद्भावे इच्छादीनाम्मध्ये एकतमस्यापि उद्भूतिदर्शनाभावात् सर्वथा

स्मृतेश्चादर्शनात्। अतो निर्विवादमेतत् यद्देहव्यतिरिक्तः आत्मा देहान्तर्गतोऽस्ति। न च घ्राण रसन चक्षुः त्वक् श्रोत्राणीन्द्रियाणि ज्ञानकारणानि सन्ति, एतद् द्वारैव ज्ञानोदयात्, अत इन्द्रियाण्येवात्मा नं तु तेभ्यः पृथगिति वाच्यम्, अजन्मान्धस्य पुरुषस्य चक्षुरनुभूतस्य द्रव्यस्य वा गुणस्य स्मरणात् अनुभवितुः स्मर्तुश्चैकत्वात् न हि अन्यदृष्टमन्यः स्मर्तुं प्रभवति। एवमिन्द्रियेभ्यो विभिन्न एवात्मा। यश्च सर्वसाक्षी सर्वद्रष्टा सर्वस्मर्ता एक एव सिद्धः। मन एवात्मा इत्यपि वदतां केषांचित् प्रौढाज्ञानविलासितमेवास्ति। कुतः मनसोऽतीन्द्रियत्वात् तद्गत गुणानामप्युदितानां ज्ञानादीनामप्रत्यक्षत्वप्रसंगात्। आत्मनः प्रेरणयैव मनः तत्र तत्र विषये गच्छति प्रक्षिप्तं भवति। ततस्ततः समागच्छति समाकृष्टं च भवति। यथा शिशुः क्रीड़ा गुलिकां प्रक्षिपति गृहकोणादिषु, आददाति च तां तत्तत्स्थानेभ्यः एवमात्मा तत्र तत्र मनोनियुंक्ते चाकर्षति। एवं ज्ञानकरणभूतस्य मनसो न ज्ञानकर्तृत्वं सम्भवति। इतितद् भिन्नः प्रसिद्ध एवात्मा प्रतिभातितरान्नितराम्। अथाधुना देहान्तर्गतः द्वितीयः पदार्थो मनो निरूप्यते, यतोऽत्र स्वप्नविज्ञानस्य निरूपणे मनसश्चात्र प्रधानहेतुत्वं विद्यते। यद्यपि मनो न प्रत्यक्षतो ज्ञायते तथापि तत्तत्कार्यैः स्मृत्यादिभिरनुमीयते। स्मरणम्, अनुमानम्, आगमः, संशयः, प्रतिभा, ज्ञानं, स्वप्नः, ऊहा, सुखदुःखप्रत्यक्षम् इच्छादयश्च मनसो ज्ञापकानि अनुमापकानि सन्ति। स्मृत्यादयो हि न वाह्येन्द्रियनिमित्तेन जायंते किन्तु करणान्तरनिमित्तमपेक्षितुमर्हंति। घ्राणादीनामिन्द्रियाणां गन्धादिभिस्तदर्थैर्युगपत्सत्स्वपि सन्निकर्षेषु युगपत्तानि तानि ज्ञानानि नोत्पद्यन्तेऽतोऽनुमातव्यमिन्द्रिय सहकारिरनिमित्तान्तरं

तत्तदिन्द्रियसंयोगि अव्यापकञ्चास्ति। यदसन्निधाने ज्ञानन्नो जायते यत्सन्निधौ तु जायते तदेव मनः। तत्संयोगास्वीकारे केवलेन्द्रियार्थसंयोगस्यैव यदि ज्ञानकारणत्वमंगीक्रियेत तदा ज्ञानानान्निखिलेन्द्रियजन्यानां युगपदुत्पत्तिः प्रसज्येत अतः आवश्यकत्वम्मनः संयोगस्य, तत्वे तु मनः पदार्थस्य सिद्धिर्निर्वाधैव, युगपज् ज्ञानानुत्पत्तेरेव मनसो लिंगत्वम् अस्ति। तदुक्तं न्यायदर्शने····सूत्रम्···युगपज् ज्ञानानुत्पत्तिर्मनसो लिंगम् इति। यद्यपि युगपज् ज्ञानानामनुत्पत्तिः ज्ञाननिष्ठा न तु मनोधर्मस्तथापि रूपादिज्ञानानि चक्षुरादिव्यतिरिक्तं कारणान्तरमपेक्षन्ते युगपत्तेषामनुत्पत्तिदर्शनात्। यथाशिल्पिनो रथकारस्य समीपेऽनेकस्य वास्यादेः साधनस्य समुपस्थितावपि न वास्यादि साधनानि युगपदनेकं रथादि वस्तु, कार्यन्निर्मातुं प्रभवन्ति, हस्तरूपस्यान्यस्याधिष्ठापकस्यापेक्षितत्वात्। एवं चक्षुरादीनीन्द्रियाणि न जनयन्ति तानि तानि ज्ञानानि युगपत्। अतस्तेभ्योऽन्यत् अधिष्ठापकमपेक्षणीयम्। तथा चानुमानप्रयोगः, चक्षुरादीनीन्द्रियाणि स्वप्रवृत्तावाधिष्ठापकांतरापेक्षीणि युगपदप्रवृत्तेः वास्यादिवत्। न च मनः सन्निधानसत्वे एकेन्द्रिया ग्राह्याणां नीलपीतादीनां ज्ञानं युगपदुत्पद्येतेतिवाच्यम्। युगपत्संबंधिनो भेदात् विषयेन्द्रियरूपकारणाभावात्। तत्तुच्छम् चक्षुः संयुक्ते गवादौ गुणक्रिययोः श्वैत्यचलनरूपयोः द्वयोरपि युगपद् वोधात् पृथग्ज्ञानयोरपि सतोः दर्शनात्। न च नीलपीतादीनां युगपज्ज्ञानशंका निर्मूला, फलवलाज् ज्ञानेच्छायाः सहकारित्वमाश्रीयते तदभावाज् ज्ञानद्वयन्नोत्पद्यते तादृशेच्छायाः सत्वे तु समूहावलम्बनात्मकं ज्ञानमेकमुत्पद्यतेति वाच्यम्। बोद्धभिच्छाया अभावेनैव भिन्नेन्द्रियग्राह्याणां ज्ञानानां युगपदनुत्पत्तेः सुतरां सत्वात्, मनः पदार्थो न सिध्येत्, एवं तदनावश्यकत्वप्रसंगात्, इति तन्न इन्द्रियाणां युगपपंद-

नेक क्रियाकारित्वन्न सम्भवति यथा वास्यादेः कारणस्य युगपदनेको
क्रियाकारित्वं नास्ति इत्येवदृष्टत्वात्, सत्वेऽपि समवधाने अधिष्ठा
पकान्तरस्य हस्तादेः। एवं प्रकृतेऽपि न युगपज् ज्ञानद्वयम् भवति।
विभोरात्मनोऽधिष्ठातृत्वेन सर्वेन्द्रियसम्बन्धस्य सत्वात्, मनः
स्वीकृतिं विाऽनुपपत्तिः सर्वथा परिहर्त्तुमशक्या इति निष्पन्नम्मनस
ऽधिष्ठापकत्वमिन्द्रियाणाम् अतः परं तृतीयः पदार्थ इन्द्रियाणि।
तानि च घ्राणरसन चक्षुस्त्वक्श्रोत्राणि गन्धरसरूपस्पर्शशब्-
दानामर्थानां यथाक्रमं प्रत्यक्षकारणानि सन्ति, वक्ष्यमाणव्युप-
त्यनुरोधात्। तथाहि जिघ्रत्यनेन तद् घ्राणं गंधग्राहकम्।
रसयत्यनेन रसनं रसग्राहकम्। चष्टेऽनेन चक्षुः रूपग्राहकम्
स्पृशत्यनेन स्पर्शनं त्वक्स्थानमिन्द्रियं स्पर्शग्राहकम्। शृणोत्यनेन
श्रोत्रं शब्दग्राहकम्। एवं स्वस्वविषयग्रहणसमर्थानीन्द्रियाणि
इति निष्पन्नं निर्विवादम्। इत्थं च आत्मा मनसा युज्यते मन
इन्द्रियेणेन्द्रियमर्थेनेतिरीतेरनुसरणात्, पूर्वोदितात्ममन
इन्द्रियैः तत्तत्पदार्थसंयोगजज्यं सकलमेव लौकिकमिन्द्रियविषयक
ज्ञानं सम्भवति। तच्च तिसृषु अवस्थासु जाग्रत् शयनसुषुप्ति-
रूपासु जाग्रत्येव सम्भूतिमुपेति। अथाधुना तदवस्थात्रय
प्रदर्शने नात्र द्वितीयावस्थाप्रदर्शनपुरस्सरं स्वप्नविज्ञाननिदर्श्यंते
इन्द्रियमनःसंयोगावस्था जाग्रदवस्था। तत्तदिन्द्रियाणां तत्तद्
विषयै स्वीयैः संयोगात् इन्द्रियजन्यं ज्ञान मिन्द्रियार्थं विषयक
किंचिदिदमिति निर्विकल्पकम् जायते। रूपमिति, रस इति,
गन्ध इति, इत्यात्मकं सविकल्पकं व्यवसायात्मकम्, अनुव्यव-
सायात्मकं तु रूपमहं जानामीतिरूपज्ञानमुत्पद्यते। तदेतज्जाग्रद-
वस्थायामेव। अथ केयं स्वप्नावस्था इति चेदुच्यते। मिद्धामनः
संयोगावस्था स्वप्नावस्था, यदा मनः संयोगइन्द्रियैः सार्धंन्न
भवति किन्तु मिद्धानामिकया नाड्या सह जायते तदा

जाग्रदवस्थाविरहात् इन्द्रियाणां स्वीयतत्तदर्थप्रत्यक्षजनना-योग्यता सञ्जायते। यदा जनः निश्चिन्तो वा सचिन्तो व्यवस्थितमना वाऽव्यवस्थितमनाः सन् शान्तोऽशान्तो वा भूत्वा तिष्ठति वा तल्पादिषु विश्राम्यति तदा मनो व्यापारः शैथिल्यमुपैति तत इन्द्रियवृत्तीनामपि शिथिलत्वात् क्रमेण नेन्द्रियाणि प्रवर्तन्ते स्वेषु स्वेषु विषयेषु तत्प्रवर्तकस्य प्रेरकस्य प्रधानसहायस्य मनसस्तैः सममसंयोगात् मनसः संयोगस्तु शनैः शनैर्मिद्धया सह जायते यदा तदा स्वप्नो भवति। किं स्वरूपो ऽयं स्वप्न इत्याकांक्षायामुच्यते। वेदान्तनयानुसारिभिरेतल्लक्षणं स्वप्नस्य निगद्यते। इन्द्रियेषुपसंहृतेषु जागरितसंस्कारजः प्रत्ययः सविषयः स्वप्न इति। स्वप्नावस्थायां यदेन्द्रियाणि उपसंह्रियन्ते ततस्तानि स्वान् स्वानर्थान् ग्रहीतुन्न प्रकल्पन्ते किन्तु जाग्रदवस्थायां यत्किमपि श्रुतं वा दृष्टं तदनुभवाद्यः संस्कार आत्मनि जातः तज्जन्या या उपलब्धिः तत्तद्विषयिणी समुद्भवति तदेव रूपं स्वप्नस्य। तथा चोक्तं भागवतेपि व्यासीये दृष्टश्रुताभ्याम्मनसानुचिन्तयन् प्रपद्यते तत्किमपि ह्यपस्मृतिः इति। अत्र कश्चिद् वदति—आलयविज्ञानद्वारा स्वप्नेऽपि चैतन्यं तादृशं ज्ञान चेत्थं संभवति, यथाऽऽयते विस्तृते कस्मिंश्चिद् वाससि एकत्रिते कृते तत्रैकस्मिन् प्रदेशे मृगमदः स्थापितः सर्वान् तत्प्रदेशान् गंधितान् विदधाति, परं-परयैकस्य तद् भागस्य द्वारा। एवं जाग्रदवस्थानुभूतान् विषयान् स्वप्ने तथास्वरूपान् पश्यति जनः। एतद् बौद्धस्य क्षणिकविज्ञानात्मवादिनोऽबोधविलसितं प्रतिभाति, एवं सतिस्वप्नविषयकोपलब्धेः सत्यता प्रसज्येत। स्वप्नाकारस्तु सर्वथा मिथ्याभूत एवानुभूयते सर्वैरप्यनायासेनैव। नह्यत्र प्रमाणमपेक्षितम् सर्वानुभवसिद्धत्वात्। किञ्चोक्तमपि खण्डन-खण्डखाद्ये श्रीहर्षं निर्मिते जीवब्रह्मणोः शुद्धाद्वैतवादिनो,

वल्लभाचार्यस्य, जगत् सत्यमिति मन्यमानस्य, सिद्धान्तं प्रत्याख्यातुमाक्षेप रूपेण, यत्र दृश्यत्वं तत्र मिथ्यात्वं यथा दृश्यत्वं च स्वप्ने तत्रापि तथात्वेन मिथ्यात्वं विद्यते तद्वज् जगत्यपि दृश्यत्वेन हेतुना मिथ्यात्वं प्रसज्यते इति। अथ स्वप्नस्याज्ञानरूपत्वादेव वैशेषिकदर्शनीये प्रशस्तपादभाष्ये स्वप्नस्याविद्यात्वेन प्रतिपादनम्मनीषिहृदयंगमम्भवति। तथा हि तत्राविद्या चतुर्विधा संशयविपर्ययानध्यवसायस्वप्नलक्षणा इति अर्थात् निस्संदिग्धाबाधिताध्यवसायात्मक प्रतीतिरूपा विद्या तद् विपरीतरूपा अविद्या चतुष्प्रकाराऽस्ति। संशयविपर्ययानध्यवसायस्वप्नरूपा। ननु तर्कोऽपि अविद्यारूपः शंकानिवर्तकोऽस्ति स कथंनोक्तः, तन्न तस्य विशिष्टत्वात्। यथाऽऽत्मा उत्पत्तिधर्मा वाऽनुत्पत्तिधर्मा इति संशये जाते, किञ्च धूमहेतुकवह्नेः अनुमानस्थले धूमवह्निव्यभिचारसंदेहे सति विचारात्मकतर्केणैव निर्णीयते यत् आत्मा यदि उत्पत्तिधर्मास्यात् तदैकस्य तस्यानेक शरीरादिसंयोगस्वरूपः संसारस्तदत्यन्तविमोक्षलक्षणः अपवर्गश्च नो जायेत। अनुत्पत्तिधर्मकेतु तस्मिन् न दोषः। एवमेव च धूमो यदि वह्नि व्यभिचारी स्याद् वह्नि जन्यो न स्यादिति तर्केण वह्निधूमयोर्व्यभिचारे शोधिते तादृशमनुमानन्निर्बाधम् इति सत्यम् अनवधारणात्मकत्वात्तर्कस्य, संशयप्रभेदत्वात् न तर्कः पृथगुक्तः। अतः चतुर्धैवाविद्येति सम्यक् परिगणनम् अथ वैशेषिकदर्शनभाष्यानुरोधेन स्वप्न स्वरूपं निरूप्यते— गुणग्रंथे बुद्धि निरूपणप्रकरणे वर्णितम् उपरतेन्द्रियग्रामस्य प्रलीनमनस्कस्येन्द्रिय द्वारेणैव यदनुभवनम्मानसं तत्स्वप्नज्ञानम्। स्वप्नद्रष्टुः पुरुषस्येन्द्रियाणि यदा स्वविषयग्रहणाद् विरतानि भवन्ति सर्वात्मना च तदीयं मानसं लीनं जायते

तदोपरतेन्द्रियसमूहस्य प्रलीनमानसस्य च तस्येन्द्रियद्वारा योऽनुभवः पूर्वाधिगमानपेक्षः परिच्छेदः स्वभावः मनोमात्र-प्रभवः स स्वप्नः। कदा कथञ्चमनः पुरुषस्य प्रलीयते इन्द्रि-याणि च विरमन्ति, इति चेदाह—आत्मना शरीरव्यापार विधानाद् गमनागमनाद्दिवसे दैन्यमुपगतस्य खिन्नस्य परिश्रम-परिभूतस्य देहधारिणः प्राणिनः निशायां श्रमापनोदनार्थं भुक्तस्य पीतस्याहारस्य रसादिरूपे परिणामार्थं। च धर्मा-धर्मात्मकेनादृष्टेन सम्पादितं प्रयत्नमिच्छतः आत्मान्तःकरण-संयोगान्मानसे जायमानो यः क्रियासन्तानः तस्मादन्तर्हृदये बाह्येन्द्रिय-सम्पर्क विरहिते आत्मप्रदेशे सति मनो निष्क्रियं सन् निश्चलं तिष्ठति यदा तदैव मानवस्य मनः प्रलीनं वाच्यम्। तादृशे च मानसे प्रलीने सम्भूते इन्द्रियग्राम उपर-तिमुपैति, तदा चेन्द्रियाणामन्तः करणानधिष्ठितत्वेन विषय-ग्रहणयोग्यता नश्यति। बाहुल्येन प्राणापानवायुसन्ततिप्रवेश निर्गमस्वरूपायां पूर्वोक्तस्वरूपप्रलीनमनोऽवस्थाकाले प्रवृत्तायां प्रवृत्तौ सत्यामात्ममनः संयोगात् स्वापेतिनामधेयात् आत्म-गुणविशेषात्संस्काराच्च पूर्वानुभूतविषयाद् विद्यमानेषु देश-व्यवहितेषु कालव्यवहितेषु विषयेषु अपरोक्षसंवेदनाकारं स्वप्नज्ञानं समुत्पद्यते। तच्च प्राधान्येन त्रिविधं भवति इति निगद्यते। उत्कटसंस्कारात् रसादिधातुदोषात्, धर्माधर्मा-दृष्टाच्चेति त्रिविधकारणजन्यं तत्तद्रूपं शुभफलकम शुभफल-कमशुभाशुभफलकमफलकं च विविधाकारं स्वप्नज्ञानं जायते। उत्कटसंस्काराद्यथा—जनः कामी सन् प्रियतमामर्थं यदाऽऽदृ-तश्चिन्तयन् स्वपिति यदा वा कुपितो भवन् शत्रुरूपमर्थमाध्या-यन् शेते तदा सैव स्मृतिसन्ततिः संस्कारप्राबल्यात् साक्षादर्था-वभासिनी जायते तादृशमेवार्थं पश्यति स्वप्ने। द्वितीयस्मा-त्कारणाद्यथा—

देहधारणात् धातवः—रसासृङ्मांसभेदोऽस्थिमज्जाशुक्ररूपाः सन्ति तेषां विकृतेः वातपित्तश्लेष्मणां दूषितत्वात् विपर्थयात्मकं वेदनं भवति स्वप्ने। वातप्रकृतिर्नरः कस्माच्चिन्निमित्तादुपचयमुपगतेन वातेन दूषितः सन् स्वस्याकाशगमनादीन् इतस्ततो धावनं निर्याणं प्रयाणं च पश्यति। पित्तप्रकृतिः वा पित्तदूषितस्तु जनः वह्निप्रवेशं वह्निदहनं वह्नेरुद्दीपनं स्वर्णगिरि वा तच्छिखरारोहणं चोदितास्तरविमण्डलं तादृशरवेः प्रौढ़सन्तापम् वा प्रकाशं विस्तारम् चावलोकते। श्लेष्मप्रकृतिः दूषितश्लेष्मा वा सरित्सागरप्रवाहं तन्मध्येऽवगाहनं तत्र प्रतरणं च पश्यति। हिमराशिं तद् द्रवं तदीयं शैत्यं च तुहिनपर्वतमालोकते। वातपित्तकृतिः तदुभयदूषितो वा तद्द्वयोक्तसंबंधीनि वस्तूनि तादृशविकृताकारान् आकाशविकारान् तदुद्भवान् तन्निर्मितान् तत्र विकसितान् आकाशे संकुचितान् तत्र विस्तृतान् वैरूप्यमुपेतान् अर्थान् च वह्निविकारान् वह्निनिर्मितान् ततः समुद्भूतान् तत्रैवास्तान् प्रकाशितान् हीनान् अहीनान् मृदुलान् परुषान् वैचित्र्यमुपयातान् दर्शनीयानदर्शनीयान् भयानकान् रम्यानरम्यानित्यादिनानाकृतीन् अकिंचित्करान् सर्वंकरान् अल्पान् अधिकान् स्थूलान् अणून् एवंभूतान् बहून् पदार्थान् पश्यति स्वप्नगतः। एवं वातपित्तश्लेष्मप्रकृतिः वा एतत् त्रयदूषितप्रकृतिः पूर्वोक्तोभय विधविधिसहितान् सरित्कासार सागरजनीन् तद् भागान् तदुद्भूतवस्तुविभागान् मनस उद्वेगकरान् शमप्रदान् अशमप्रदान् यथाकथंचित् स्थितान् सम्यक् स्थितान् अनियमनिहितान् अक्रमनिबद्धान् क्रमनिबद्धान् सीमसमेतान् सीमासमेतांश्च अवर्णनीयदशान् तांस्तानर्थानालोकते। यः कश्चिद् वातश्लेष्मप्रकृतिः तद् प्रकृतिर्वाऽस्ति स एतदुभयोक्त लक्षणलक्षितान् भावान् भावयति, स्वयमनु भूतेषु परानु भूतेषु श्रुतेषु च विषयेषु

गजदर्शनम् गजारोहणं छत्रधारणं छत्रलाभः छत्रग्रहणं यद् दृश्यते सुप्तौ तच्च सर्वथा सर्वविधशुभसूचकं विद्यतेऽ तस्तत्सकलं शुभसंस्कारोद्योतितधर्मेणैव न ह्यन्यतः कुतश्चिन् निमित्ताद् भवितुमर्हति। तलक्रयणं तैलविक्रयणं तैलदर्शनं तैलाभ्यंजनम् खरदर्शनम् खरोष्ट्रक्रयं वा तद्विक्रयं तदुभयारोहणं च महिषारोहणम् तद्दर्शनम् तद्युक्तशकटिकायाः गमनम् तद्युक्तशकटावारोहणम् कृष्णवासीदर्शनं तद्धारणं चेत्यादिसर्वं दुःखमूलं दर्शनम् रोगमृत्युसंताप बोधकत्वेनाशुभसूचकं प्रतिभाति। अतस्तन्निखिलमभद्रसंस्कारप्रयुक्ताधर्मेण जायते। ये च सर्वथा प्रसिद्धाः पदार्थाः स्वस्मिन् परस्मिन् चाप्रतीताः चन्द्रभक्षण रविभक्षणप्रभृतयः संति तदवलोकनं तु केवलात् प्रवलाददृष्टात् धर्मात्मकाद् भवति न तु संस्कारादपि यतस्तेऽननुभूताः ततो न तत्र संस्कारो जागर्ति। स्मृतिकारणस्य संस्कारस्यात्मविशेषगुणस्यानुभवज्ञानपूर्वकोत्पत्तिमत्वात्। अतएव यो द्रष्टा वा नुभविता स एव स्मर्ता भवतीति नियमः संगच्छते, जाग्रदवस्थायां मानसं यथानुभूतमर्थं स्मरति नत्वननुभूतम्। दूरं च गच्छति अदूरं च तिष्ठति दूरादूरस्थितानर्थान्स्मृतिविषयान् करोति। तथा सुप्तावपि मनो विप्रकृष्टं याति तत्रस्थानतत्रत्यानर्थान् व्यवस्थितान् अव्यवस्थितान् वा स्मृतिपथं नयति। अतएव यजुर्वेदमंत्रोऽपि संगतिं याति। तथाहि यज्जाग्रतो दूरमुदैतिदैवं तदु सुप्तस्य तथैवैतिदूरंगमंज्योतिषां ज्योतिरेकन्तन्मे मनः शिवसंकल्पमस्तु। अस्यार्थस्तु यन्मनो दिव्यरूपं जाग्रतः जाग्रदवस्थासम्पन्नस्य पुरुषस्य दूरं गच्छति तत्तथैव स्वप्नावस्थापन्नस्यापि दूरं याति। यच्च मनः दूरगति च ज्योतिषाम्मध्ये एकं प्रकृष्ट ज्योतीरूपमस्ति तादृशम्मे मानसं शिवसंकल्पस्वरूपं स्यात्। ननुसंस्कारादिकारणत्रयम्। उत्कटसंस्कारः, धातुदोषः अदृष्टमिति प्रकारत्रयसम्पन्नम्, विपर्य-

यज्ञानं जनयति इति कुतो न मन्यते अतस्मिन्स्तदितिरूपस्य विपर्ययज्ञानस्य समारोपित वाह्यस्वरूपतया स्वप्नत्ययसत्वात् इति चेन्न मनोवस्थाविशेषभावित्वात् तस्य, स पृथगेवास्ति अतो भिन्नो विपर्ययाज्ञानास्वप्नः मनोद्वितीयावस्थामुपगतः, निर्वाधमेतदस्ति पूर्वोक्तयुक्तीनाम् प्रागुदितमंत्रस्य च तत्सत्वे तद्वैचित्र्ये प्रामाण्यात् वक्ष्यमाणानां बहूनां स्वप्नस्य स्वरूपाणां विषयाणां च प्रदर्श्यमानत्वात्। यत्तु कदाचित स्वप्नदृष्टस्यार्थस्य स्वप्नावस्थायामेव प्रतिसंधानंसत्वावत् तत्रापि चेन्द्रियग्रामस्योपरतत्वात् सोऽपि स्वप्न एव स्यादिति कश्चित् तन्न तस्य स्वप्नान्तिकत्वात्, तत्तु स्वप्नान्तिकमिति वैशेषिकदर्शनभाष्ये प्रशस्तपादपीये निरूपणात्। अयम्मया दृष्ट इति प्रागनुभूतस्य स्वप्नस्यान्ते भावनाभावनात्। अतः पूर्वानुभूतस्वप्नज्ञानप्रबंधस्यानुसंधानात्स्मृतिरेवेति युक्तं प्रतिभाति। अथाधुना निगद्यते— स्वप्नकारणस्य त्रैविध्यं यदुक्तं तन्न्यूनम्। यतः मलदूषितत्वाद् मलविकृतेश्च तेषां तेषां निष्फलानां सफलानां दुष्फलानां सुफलानां च स्वप्नानां सत्वात्। तत्र तादृशकारणत्रयमध्ये एकतमस्याप्यसद्भावात्। तथाहि यदोदरस्थं मलं सान्द्रं वा शुष्कं तिष्ठति तदा पुरुषः स्त्रियः पश्यति याश्च तानि विविधप्रियवर्णानि वासांसि दधति चानेकाः चेष्टाहास्यप्रभृतीः उत्तरप्रत्युत्तररूपाणि कर्माणि च विदधति। तद्दर्शनन्तु प्रायेण सर्वदाऽकिंचित्करमेव दृश्यते। स्त्री तु बहुविधान् पुरुषान् वैचित्र्यमुपगतान् कामिनः क्रुद्धान् वा सांत्वनामुपेतान् ब्रह्मचारिणः संन्यासिनश्च पश्यति। येषां दर्शनेन मनोविनोदः कदाचित् मनः संतापः समाश्वासोऽपिचेतसः कदाचिज्जायते। नैष्फल्यं तु बाहुल्येनैवास्ति तत्स्वप्नानाम्। प्रगाढ़े तनौ बहुले च मले सति स्वप्नगतः पुरुषः आरामपरिभ्रमणं वनविहारं राजपथे भ्रमणम् वहुविधैर्जनैः साकं संल्लापं स्वीयं पश्यति

वाष्पयानद्वारा अश्वयानेन च विदेशे जिगमिषामन्यत्र देशे गन्तुं परमोद्योगमाजीविकाप्रयोजनमुद्दिश्य यत्र तत्र गमने तत्परतां सत्वरतां च स्वकीयामवलोकते। अल्पावशिष्टे मले उदराभ्यन्तर्गते सति अनेकरूपैः ऋषिभिः तपस्विभिः मुनिभिः देवैरितरैश्च महापुरुषैः समं।

सम्भाषणं प्रश्नोत्तरान् च तेभ्यः सन्तोषं मनोरथं च लब्धं वा तद्दर्शनेन तदाशिषा सुखमुपलब्धमनुभवति। अविकृतोदरे पुरुषे तु शयनमुपेते सति पूर्वोदिता भावा दृश्यन्ते। देवानां ऋषीणां च स्तुतयः स्वकृताः दृश्यन्ते तत्पूजनानि च। यदा क्षुधितः वा तत्तदीप्सुः जनः स्वपिति तदा विविधपदार्थान् भोज्यान् फलानि चानेकानि भुञ्जानान् वा पश्यति। एवं च मलस्य गाढत्वेऽगाढत्वे न्यूनत्वेऽधिकत्वे तत्तद्विकारवैशिष्टये तदीये परुषत्वेऽपरुषत्वे व सति तेन विकारान्तरेऽगमितेपि प्रागुदितानां स्वप्नानां सत्वात् पूर्वोक्तं कारणत्रैविध्यं न्यूनमिति केषांचिन्मतम्। तत्र केचित्तु एवं वदन्ति यद् वातादीनां विकृते रेव मलस्य वैकृत्यं जायतेऽतस्तत्तु तत्त्रयाभ्यन्तर्गतमिति मंतव्यम्। परंच तदपरे न क्षमंते यद् वातादीनामविकृतावपि स्वस्थपुरुषेणापि तथाविधानां प्राक कथितानां स्वप्नानां दर्शनात्। यदि तु अस्वस्थ एव नरः तान् तादृशान् पश्येत्तदा तु तदुक्तिः युक्तियुक्ता भवेत्। इतो मलविकार एव तेषां पृथक् कारणम्मन्तव्यमिति मनोरमम् जाग्रदवस्थायाम् अनुभूतस्य श्रुतस्य दृष्टस्य वा तत्त्वस्य स्वप्ने दर्शनं जायते इति तु सर्वैरेवांगीक्रियते सिद्धान्तभूतत्वात् इति। अथोच्यते प्रकृतिः सत्वरजस्तमःसाम्यावस्थारूपा सांख्यसिद्धान्तोद्भासिताऽस्ति, मुख्यतया वैशिष्टयेन भासमानत्वात्। अतः सा एव निखिलानां जन्यानां भावानां प्रत्यक्षतोऽधिगम्या-

नामनुमानादिभ्यश्च ज्ञेयानाम् सत्यंतया प्रतीयमानानामसत्वेन प्रतीतिविषयाणां च द्रव्यगुणकर्मादिरूपाणामनेकरूपैः ज्ञान-विषयाणां रम्यारम्यस्वरूपाणां स्तोकतया दृश्यानां महत्तया चावलोकितुं योग्यानां जाग्रत्शयनसुषुप्तिरूपासु अवस्थासु तिसृष्वपि भासमानानांसत्वानांम्मूलं कारणं प्रकृतिव: इत्य-वश्यम्मन्तव्यमस्ति । अतः तेषां तेषां स्वप्नानां दर्शनेऽपि सत्वं रजः तमः इति त्रिधाभिदाभिन्ना प्रकृतिरेव कारणत्वेना-भ्युपेया—तथाहि लघुप्रकाशकं च सत्वमिति सत्वगुणस्वरूप-निरूपणात् ये च पुरुषाः सत्वगुणप्रकृतयः सन्ति ते वक्ष्यमाण-कारणगुणक्रियास्वरूपाणां पदार्थानां दर्शने स्वप्नविषयके प्रभवन्ति। प्रायेण ते स्वप्नाः रागद्वेषमोहात्मक दोषत्रैराश्ये-नानभ्युपपन्ना भवन्ति । क्वचित् स्वल्पतयोपेता अपि प्रायेण अकिंचित्कराः परन्तु प्राधान्येनात्मनः शान्तिप्रदाः सन्तोष-विवेकाच्छलमनोरमत्वदायिनश्च जायंते । यतः शान्तप्रकृतयो महात्मानः श्रुतिस्मृतिदर्शनोपनिषदादीन् ग्रंथानध्येतुकामा अध्यापयितुकामाश्च परस्परं शास्त्रीयतत्वार्थनिर्णयपरा याथातथ्येन समालापं संवादं च कुर्वाणाः दृश्यंते स्वप्ने। धवलगुणविशिष्टा नानार्थाः वासोराशयः प्रकाशात्मानः सूर्यः चन्द्रः तारकाश्चार्थाः निर्मलनीरपूर्णाः सरितः सरस्यः सरांसि च पुष्पिताः फलिताः वृक्षाः कुसुमफलसमृद्धिसम्पन्नं काननं च क्षीरं दधि घृतं पायसं, गावः श्वेतवृषभाः एतदुपेतं वाहनम् शुभ्रगजाः शुक्लाश्वाः एतद्युक्तं यानं च, इत्यादयः पदार्थाः सत्वगुणभावना भाविता आलोक्यन्ते स्वप्ने स्वस्थेनजनेन । सत्वगुणविशिष्टायां प्रकृतौ सत्यां दृष्टाः स्वप्नाः शोकमोहा-दिदुर्गुणानां राहित्यस्य सूचका यतो भवन्ति, ततो रम्याणां स्थिराणां हृद्यानां स्निग्धानां सत्वानां च दृष्टानां श्रुतानामनु-चिन्तितानामेव दर्शनं जायते । स्पष्टीकृतं चेदम् वाग्देवता

प्रणयिना कविकुलहृदयेषु शरव्यायमाणेन बाणेन कादम्बयाः पूर्वार्धेयत् सत्वगुणोपचयान्वितमनसा जनेनेन्द्रियविषय-मुपगतः सात्विकोऽर्थः स्वप्नः. यथादृष्टमतिशयमनुचिन्तितं फलमादिशति, तथाहि आसीत् प्रजासु प्रवर्तित धर्मप्रसारः, धर्मावतारः, अधिगतसकलशास्त्रसारः, लावण्यजितमारःनिवा-रितप्रजापीडः तारापीडो नाम महामहीपः उज्जयिनीराज-धानीनायकः। तस्य च भूलोक सुन्दरी सौन्दर्यं स्वकमनीयतया धःकुर्वती, रतेः कान्ति न्यक् कृतवती, पातिव्रत्यं नियममधि कुर्वती, विलासवतीनाम्नीर्महिषी बभूव। लौकिकं बहुलं सुखं बहुकालं यथेच्छमुपभुंजतो स्तयोः महान् कालो व्यतीयाय सर्वसुखप्रमुखं पुत्रमुखमपश्यन्ती महिषी, एकदाऽमित दुःखसन्ततिमनुभवन्ती रुदन्ती अन्तःपुरमागतं नृपमपुत्र-जन्यं हृदयशोषंशोकं प्रकटयन्ती विततां हीनतां प्रकाशयन्ती प्रावादीत्। असन्तानस्य जनस्य सुगतिर्नश्रूयते न च दृश्यते अतः प्राज्यं राज्यं निरापदं सम्पदं च धिगावयोः। प्रत्युवाच नृपतिः समाकर्ण्यैतद् अत्र विषये महाराज्ञि किं कर्तव्यता विमूढोऽहमस्मि। आवयोः दुर्दैवस्य दुर्वितसित मेव वीजम्मन्यते। ततः महीन्द्रः इन्द्र इव भुवि धराविबुधान् बुधवरान् प्राप्त भग वदभक्ति प्रकाशान् महात्मनश्च समाहूय स्वाभीष्टसुतो-त्पत्तिनिदानं पृष्टवान् पृष्टैस्तैवैरुचे। धराधीश, महेशस्य सर्वमंगलेशस्यान न्यास्थिरा भक्तिरेव सर्वप्रदा वर्तते। प्रकृष्टतरं प्रकृष्टतमं च साध्यं साधयितुम् सा एव सामर्थ्यं परं मुपैति। श्रीमती विलासवती महिषी स्थिरभक्तियोगेन महेश्वरं विश्वेश्वरमुपचरतु सर्वतोभावेनानन्यमानसासती। ततः प्रभृति असमानया भक्त्या विविक्तान्तःकरणा महाराज्ञी प्रतिदिवसं पूजननिमित्तं व्रतं दधार। सविधि समानर्च महा-कालं कण्ठेकालं दुष्कृतजनिताऽसौख्यकालं महादेवम्।

इत्थमहःसु वहुषु गतेषु शिवस्यानितरसेवार्चनप्रसादतः अधिगतसत्वगुणोपचया परमपूताशया विगतदुरितचया महादेवी महिषी एकदा वलक्षायांक्षपायां क्षीणभूयिष्ठायां शयाना मुखे प्रविशन्तं सकलकलापूर्णं चन्द्रं ददर्श। प्रातरुत्थायेमं स्वप्नं नृपमुवाचसा। महीपस्तु प्रसन्नस्वान्तः ज्ञातस्वप्न सिद्धान्तः प्रफुल्ल लोचनः राज्ञीमवादीत्। देवि सिद्धमावयो रभीष्टं प्रसीद भूयोभूयः। अवश्यं त्वरितं सुतजन्मलप्स्यते भवती। स च कीर्त्ति धवलीकृत दिग्विभागः निहितदिर्गाशभागो भविता। निश्चप्रचमवैतु। तथा सति चन्द्रगर्भं गर्भं धृतवती विलासवती। दशमेमासि प्रेष्ठं श्रेष्ठमसाधारणगुण गरिम्णागरिष्ठं सत्वगुणविशिष्टं सुतं लेभे। मुखे चन्द्र प्रवेशरूपं स्वप्नमनुरुध्य तदीयं नाम चन्द्रापीड इति कृतमभूत्। गर्भवत्याविलासवत्याः प्रकृतेः सत्वगुणविशिष्टंत्वात् च प्रभातप्रायायां रजन्यां स्वप्नस्य दृष्टत्वात् सत्वगुणमहिमा स्पष्टं प्रतीयते। चलमवष्टम्भकं च रजः इति रजोगुणस्वरूपम्। रजोगुणप्रकृतिः पुरुषः अशान्तानाकांक्षाभावितान् रागोपहितान् मोहोद्भावितान् तद्योगाद् द्वेष्यानपि चार्थान् भावयति चिन्तयति च जागृतौ अतः तथाविधानेव प्रदृश्यमानरूपान् भावाननुपश्यति सुप्तावपिजनः। तथाहि धनप्राप्तिहेतून् भावान्, धनप्राप्तौ सुखं, द्रविणापक्षयेदुःखं स्त्रीप्राप्तिं योषितां विविधाकारसौंदर्यलावण्यादीन् गुणान् ताभिः संलापं विहारं विवाहं तन्नृत्यं गानं च तदीयं स्वप्नगतः पश्यति। लवणमरीचिकादिभिः संस्कृतान् खाद्यान् पदार्थान् विविधान् माधुर्यमुपेतान् अम्लत्वमुपगतान् च तीक्ष्णानुष्णान् रुक्षान् भोक्तुमिच्छा विषयानभिलष्यति पश्यति च। यानद्वारा कुत्रचित् गन्तुमिच्छति अवरुद्धश्च भवति कदाचित् कुत्रचित् प्रयाति समायाति च कुतश्चित् अशक्तः अकिंचिदपि कुर्वाणः

तिष्ठति। स्वीयं मृत्युं रोगं च तज्जन्यं दुःखं विपन्नानि अनाथानि गृहाणि तथाविधं नगरं तादृशान्नगरवासिनश्चन्द्दन् अवलोकते। इत्यादयो विषयाः रजोगुणसंबंधिनः तद् भावना-भाविता अन्येऽपि दृश्यंते ये च भावा दृष्टाः श्रुताः सन्ति अनुभाविताः। गुर्वावरणं च तमः इति तमोगुणलक्षणम्। तमोगुणाविष्टमनाः तत्प्रकृतिः सन् मनुष्यः एतद्विषयविविक्तानर्थान् विषयीकरोति स्वप्ने। तथाहिनीरसान् परुषान् दौर्गन्ध्योपेतान् ईषद्दुर्गन्धान् पर्युषितान् उच्छिष्टान् अमेध्यान् खाद्यानर्थान् भुंक्ते। स्वजातिभिरितरजातिकैश्च नृभिः सह तानि तानि मनोविलास विलासितानि मानसाऽविलसितानि वस्तूनि अश्नाति स्वप्नगतः। अन्यैर्भुज्यमानमशनं भुक्तावशिष्टं चात्तुं बहुतरं मन्यतेऽभिलष्यतितराम् च नितराम्। मद्यमांसादीन् भक्ष्यानभक्ष्यान् पेयानपेयान् मादकान् पदार्थान् मदजनितास्वास्थ्य गदपीडाविस्मृतीन् स्वान्तस्य मुग्धतासम्पादने हेतून् चाहेतून् सुखसुमतिसुरनिकायभक्तीनाम्, प्रखरनिष्ठुररोषोद्भावने मनीषाप्रतारणे मोहोद्दीपने च प्रधानकारणतामुपगतान् भोज्यान् पदार्थान् भक्षति स्वप्नद्रष्टा तमः प्रकृतिः। कुपानीयाः कुत्सिताकृतिकतटाः कुसरितः दृश्यन्ते यत्र च क्वचित्स्तोकं वा बहुलं कुत्रचिन्निम्नं वा क्वचिदनिम्नं सलिलमवलोक्यते। काश्चननद्यः नानाविधैः परुषैः परुषेतरैश्च शुष्कैरशुष्कैः तृणैः काशादिभिः, वेणुभिः तदन्यैरनेकविधैः काष्टैरपि समावृतप्रान्ताः लक्ष्यन्ते। विरुद्धविराविभिः विगतरामणीयकैर्दुर्दर्शनैः भीमाकारैः बहुकृतस्वल्पकृतकाय प्रसारैः भीषणरमणीयकर्मप्रकारैः कुत्स्यमानविरुतैः दृश्यादृश्यचरितैः विविधैः पक्षिणां गणैः समेताः च सरितो याः सन्ति यासां च तटसम्बन्धिनो वृक्षसमूहाः कुचेष्टितकुरुतानां खगानां वृन्दैर्युक्ताः चित्तक्लेशकरणपटवः तिष्ठन्ति।

उत्कटाकुलताभीतिक्लिष्टजननप्रभुत्वमितानि काननानि च दृश्यंते। यानि च जनावलोकनवर्जितानि जनरवविरहितानि परमप्रलम्बपादपततिततानि, क्वचिच्च सान्द्रभूरुहावलिभिः कुत्रचिच्च विरलविरुदावलिभिः संखचितानि क्वचित् स्तोक-स्तोकतृणानि अन्यत्राधिकाधिकशष्पवहुप्रसारकलुषित कृष्णानि अर्धविटपानि अर्धार्धविटपानि मधूच्छिष्टमाध्वी-कद्रुममालोपेतानि शुष्कपत्रतरुव्रततीपुञ्जनिकुञ्जानि अल्पाल्पनीरससरसफलसमेतकुञ्जस्थलानि अनन्तायातअनायात लघुगुरुशुष्कतरुलतादलपटलाच्छादितभूभागानि निष्पन्न-प्रदेशानि च शुष्ककाष्ठमहाराशिसहितकतिपयस्थलानि मृगपतिनिनादभीतपलायितहरिणकदम्बानि पञ्चाननशावक व्रजचीत्कारचीत्कृतानि वनकरियूथप्रचलितभयावहानि बहुविधैः वृकद्वीपिप्रभृतीनां वन्यानां चतुष्पदां गणैर्दुर्दर्श-नानि अशान्तिभीतिजनकानेकविधारण्यकजन्तुपरुषशब्ददुर्भगानि विजलानां सजलानां प्रभूतसलिलानामल्पपयसां वननदीनां तटेषु तटप्रान्तेषु वृक्षेषु स्थलेषु च स्थितानां सकरुणं निष्करुणं च सहर्षं निर्हर्षं कूजन्तीनां खगततीनां विरावेण साध्वस-सम्पादकानि वनानि संति। यत्र च विमनीकृताः पान्थाः विस्मृत्याऽपि कथंचिदपि गन्तुं प्रवेष्टुं च न प्रभवन्ति स्मरन्तो दुश्चरितानि दुःशकुनानि भीतिप्रदानेदक्षतामुपगतानि असौख्यसन्तापप्रदानकुशलानि चेमानि अरण्यानि तमः प्रकृतिना नरेणैव स्वप्ने द्रष्टव्यानि। अपि च तमोगुणा-विष्टमनाः विगतरसान् नैर्मल्यरहितान् गिरितटगतान् भूमि-जातान् पश्यति स्वप्नगतः। गिरिगहनगुहासु प्रविष्टानां मृगेन्द्राणां भीतगम्भीरनादांश्च शृणोति। पलायमानानित-स्ततः, पर्वतशिखरेषु तदीयमध्यभागेषु तत्प्रान्तेषु च वन्यपशुराशीन्, खेचराणां वृन्दानि च रवे दृग्विषयीकरोति।

इत्थं सत्वरजः तमोभिर्गुणैर्भेदैः प्रभिन्नायाः प्रकृतेः तत्तद्गुणानां प्राधान्ये वैशिष्ट्ये वा पूर्वविधया भेदमागतान् तान् तान् पदार्थान् याथातथ्येनायाथातथ्येन वा सुप्तौ पश्यति। एषा स्वप्नस्थितिः मनसा निर्मिता सृष्टिः अवस्तुभूता न कथंचिदपि यथार्थतामिता वर्तते। मनश्च संकल्पविकल्पात्मकं स्वरूपतोऽस्ति। अतः प्रभूताकारा अप्रभूताकारा भावनाः कल्पते। कल्पितविषयेभ्यो दूरस्थमदूरस्थमव्यवस्थितं च दृश्यं वस्तु भावयति। जागृत्यामवस्थायामिच्छाद्वेषप्रयत्न सुखदुःखज्ञानात्मकानामन्तर्गुणानां साक्षात्कर्ताऽऽत्माऽर्थक्रिया-समर्थां पारमार्थिकीं दशामापन्नः सन्तिष्ठते। मनश्च प्रधानकारणभूतमस्ति अखिलेन्द्रियविषयग्रहणे, यथा छिदि-क्रियायां कारणभूतं कुठारात्मकं साधनम्। घ्राणरसनचक्षु-स्त्वक्श्रोत्रनामानि विकृतिरहितानि स्पष्टक्रियाणि पञ्चापी-न्द्रियाणि गंधरसरूपस्पर्शशब्दान् पृथिव्यादीनां गुणान् यथाक्रमं गृह्णंति। अर्थक्रियासामर्थ्यरहितायामुक्तायां स्वप्ना-वस्थायान्तु मनोऽव्यवस्थितं भवति प्रलीनमज्ञानावस्थंसत्। अत उक्तेन्द्रियविषयानुक्तेन्द्रियद्वारा ग्राहयितुं न कल्पते। इन्द्रियैः सह मनः संयोगाभावात् वाचामगोचरं चमत्कारं बृहदाकारं स्तोकाकारं च व्यापारं विदधाति मानसम् सुप्तौ, दृष्टान् श्रुतान् वा कस्यचिदपि इन्द्रियस्य विषयभूतान् विषयान् स्वासंवद्धान् वासंवद्धान् अल्पफलान् बहुफलान् प्रियफलान-प्रियफलान् शुभस्वरूपानशुभस्वरूपान् मृदुलाकृतीन् परुषा-कृतीन् प्रकाशमयानप्रकाशमयान् ज्ञानविषयानज्ञानविषयान् मायावहुलानल्पमायान् समुदायारब्धान् अवयवारब्धान् मृत्युरूपान् जनिरूपान् यथाऽवोधं यथाऽप्रकारं संकल्पितान-संकल्पितान् विपरीतरूपान् सुपरीतरूपान् अर्थान् विषयी करोति स्वप्ना। तथा च स्वप्नस्य मानससर्गात्मतया मानसमनु-

चिन्तनं केवलमवशिष्यते। एवं च यथावत् स्थितस्य वस्तु-स्वरूपस्यान्यथारूपेण दर्शनम् तु असत्यात्मकत्वेन प्रमात्मक ज्ञानाभावात् भवति। मनसस्तदाऽव्यवस्थितरूपत्वेन यथावत् ज्ञानानुदयात्। यथा कश्चिज्जनः स्वसुतस्य स्वनगरादन्यस्मिन् नगरे पठितुं वास्तव्यस्य एकाकित्वेन परमप्रियस्य, सुरूपस्य, सुवृत्तस्य, सुशीलस्य, पितुराज्ञानुवर्तिनः, एकस्यां निशि मृत्युं दृष्टवान् शयानः सन्, ततः स प्रौढां व्याकुलतामापन्नः शोक-सागरे ब्रुडितः गतवान् कतिपयान् विदुषो ज्योतिर्विदः प्रष्टुमेतस्य दृष्टस्य फलम्। अथ च स्वप्नः विपरीतपरिणामो दृष्टाद्विषयादासीत्। तत्सूनोरायुस्तु सप्ततिवर्षेभ्योऽधिकमभूत्। अन्यथादृष्टस्यान्यथाफलं कुतोऽभवदिति शंकायां सत्यां तु अपारमार्थिक्येव दशेयमिदमेवोत्तरम् सुवचम्। मृषारूपत्वात् सुप्तेः। किञ्च दृष्टस्य श्रुतस्यैववाऽनुचिन्तनं भवति स्वप्न इति निर्णयात्। इह प्रकरणे स्वप्नद्रष्टाऽऽत्मतनयस्यायुषि विघ्नौघानां तस्य दुरितानां च क्षयविधान द्वारा, यथाऽयं दीर्घायुः स्यात् तथा कथंचिदपि सर्वथा यतनीयम् एतद्रूपेण चिन्तनात् तादृशस्य चिन्तनस्यानुचिन्तनम् मृत्युरूपं दृश्यते। अतो नह्यचिन्तितं दृश्यते स्वप्न इति सिद्धम्। स्वकीय दुरितस्याल्पस्य फलमप्यल्पमनुभूतं द्रष्ट्रा तावता दर्शनेन, न पुनः साक्षात् तथा दुष्टचिन्तनं जागृतौ भवतीत्यपि सिद्धम्। अतोऽन्यरूपस्य स्वप्नस्यान्यरूपेण पर्यवसानमिति स्वाभाविकमेतत्सिद्धम्। एवमेव वक्ष्यमाणे ईदृशविषयकेऽन्यस्थलेऽपि समाधेयम्, काचिद् वृद्धावैधव्यव्याधिनाऽनिवार्येण ग्रस्ता, ग्रस्तं मृतिना एकमेव स्वीयं सूनुमेकाधारभूतं जीवनस्य, युवत्वमुपेतमविवाहितं मातृसेवाप्रसितमानसं शास्त्रमर्यादाऽनुवर्तिनम् अधिगतशास्त्रीयबोधयाथातथ्यम् स्वकीयद्विजकर्मणि सम्यक्निरतम् दृष्टवती तं प्राणेभ्योऽपि अधिकं मन्यमाना

सा कृतमरणनिर्णया मुमूर्षुरासीत्। सापि महात्मभिर्दत्त विवेका निराकुलाऽभवत्। इत्थं च प्रकृतेऽपि पूर्वोक्तदिशा शंकायाः समाधानमनुसंधेयम्। अतः निश्चितप्रायमेतत् यत् स्वप्ने वस्तुनः वास्तविकस्वरूपाद् भिन्नमेव रूपं दृश्यते फलान्तरे च परिणमति। कस्यचिन्नरस्य प्रतिवेशे स्थविर जनद्वयमवसत्। तदुभयमपि युगपदेव रुजा पीडितं जातं तन्मध्ये एकस्तु कायस्थोऽपरो वणिक्। तदैव कश्चित् प्रतिवेशी स्वप्नगत एकस्य रोगिणो गृहे गीतवाद्यप्रमुखं विशिष्टोत्सवं दृष्टवान्। यदा स निद्रातोऽपेतः तदैवतद् गेहे तदीयाम्मृति-मार्कणितवान् यतः स तस्यामेव शर्वर्यामुपेतमृत्युर्जातः। इतररुग्णस्यगेहे तु स एव प्रतिवेशी तस्य रुग्णस्य पञ्चतत्व-गतिं स्वप्ने दृष्ट्वा निद्राच्युतिं च प्रातरुपलभ्य श्रुतवान् यत् न तस्य मरणं जातम्। किन्तु यदा कतिपयान्यहानि व्यतीतानि तथा रोगी गदान्निर्मुक्तवान्। इत्थं चानुमीयते यत् कृतप्रत्यक्षान् तत्तदिन्द्रियविषयानात्मा स्वप्नेऽव्यवस्थितेनान्तरिन्द्रियेण यथा कथंचिद् यद् वा तद्वा विषयपरिवर्तितं विपरीतमनुभवति। अन्यद् दृश्यतेऽन्यस्मिन्—फले परिणम्यते अभिव्यक्तीकृतं चैतद्—नैसर्गिक कवित्वप्रतिभापुञ्जाधारस्तम्भदण्डेन दण्डिना महाकविना दशकुमारचरिते उत्तरपीठिकाया आद्योच्छ्वासे राजवाहनावन्तिसुन्दर्योः प्रथम सुरतवेलायाम्। यत् कुत्र चिद् दृक्पथं यातो विषयः तत इतरत्र भूमौ फलति। तथाहि उभावपि विलासिनौ सान्द्रानन्दं रतिप्रबन्धं विधाय रतिखेदश्रान्त गाढां निद्रामुपगतौ दृश्यमिदमीक्षितवन्तौ, कश्चिद् वृद्धो हंसो विसगुणैर्बद्धपादोऽस्ति। एवं स्थितौ द्वावपि प्रबुद्धां भीतिमापन्नौ प्राबुध्येताम्। अवलोकितं च उपेतामन्दशोकभारस्य राजकुमारस्य राजवाहनस्य चरणयुगलं रजतशंखलया नद्धमिति। अतः सुवचमिदं प्रतिभाति कुत्रत्यं

स्वप्नदृश्यमन्यत्र प्रतिफलतामेति । वृद्धहंसपादबन्धनं विसगुणैर्दृष्टं जातं च तत् चरणयोः रजतशृंखलया राजवाहनस्य। वस्तुतस्तु न सद्भूतम्मनसोऽव्यवस्थितत्वात्तदा। किन्तु रात्रेः पश्चिमे यामे वा ब्राह्मे मुहूर्ते दृष्टः स्वप्नः प्रायेण याथातथ्यमधिगच्छति । ब्राह्मे मुहूर्ते वा प्रभातप्रायायां शर्वर्यां दृष्टः स्वप्नः यथास्वरूपं सत्यतांगमयति । निर्दिष्टं चैतद् हर्षचरिते प्रथमोच्छ्वासे । आसीदेकः सुचरिततिसम्पादने कृतमतिः दुरितकृतिविरतिः पुष्पभूतिर्नाम महीशः स्थाण्वीश्वरा भिधेयजनपदाधीशः । सच बाल्यात् प्रभृति स्वभक्तभव्य-भावनवल्लभे भवानीवल्लभे असदृशीं भक्तिं भावितवान्। तस्मात् पुष्पभूतेः भूपतेः सकाशादुदपादि प्रज्वलितप्रतापः महीपः भास्करातुलभक्तिप्रवणः प्रभाकरवर्धनो नाम । तस्य राज्ञी यशोवती एकस्यां निशायां प्रभातप्रायायां हर्म्यपृष्ठे शयाना स्वप्नं दृष्टवती। यत् भक्तभव्यानां विधातुः सवितुर्मण्डलात् परमतेजःसम्पन्नौ द्वौ कुमारौ गृहीतशास्त्र हस्तावनन्यसौन्दर्यकमनीयया कन्ययाऽनुगम्य मानौ निर्गत्य भूमितलमवतीर्य विलपन्त्या ममोदरं विदीर्य प्रवेष्टुमुद्यतौ। इत्यालोक्य प्रबुद्धा वेपमाना पतिम्नृपतिमाहूतवती। प्रबुद्धो नृपालः प्रभाकरवर्धनः यशोवत्याः श्रुत्वेमं स्वप्नमुक्तवान् सहर्षचेताः तस्यै समाश्वासं ददत्। भो महिषि परमप्रियोऽ-यंस्वप्नोऽस्ति। चिरादभिवांछितोऽस्मदीयो मनोरथ एव प्रदत्तौ भगवता भक्तवत्सलेन सहस्रमरीचिमालिना। एकया तनयया सहितौ द्वौ सुतौत्वत्तोजन्म त्वरितंयथाकालंमवश्यंग्रहीष्यतः। तथैव वृत्तेजाते प्रभातस्वप्नो यथार्थभाग्भवति, निर्णीत प्रायमेतदनुभूतमस्ति ।

अपिच निशायाः चतुर्थयामे दृष्टिमुपगतः स्वप्नः यथार्थ दृष्टार्थफलं प्रदर्शयति। स्फुटमेतन्निदर्शितम् कविताकामिन्यां

निहितपंचवाणेन वाणेन कविवराग्रगण्येन गीर्वाणवाणी प्रियेण विरचिते हर्षचरिते प्रथमोच्छ्वासे। तथाहि-प्रभाकर प्रभं प्रतापमादधानः प्रभाकरवर्धननामधेयः महाराजः स्थाण्वीश्वरः यदाज्येष्ठं सुतं राज्यवर्द्धनं हूणान् विजेतुं हन्तुं च प्रहितवान्। तदा प्रौढशास्त्रविमर्शः अधिगतसर्व विद्यहर्षः हर्षः वने मृगयारसिकः मृगयां क्रीडन् कतिपयान्य हानि निवसन् प्रमोदपरम्परां प्राप्नोत्। एकस्मिन्नह्निस त्रियामायाः चतुर्थे यामे भयावहमशुभं स्वप्नमालोकितवान्। यत् दवदहनेनदह्यमानं सिंहमेकमदर्शत्, तस्मिन्नेव वनहुतभुजि स्वशिशूनुत्सृज्यात्मानमुत्प्लुत्य पातयन्तीं सिंहींचालोकत। एतदाकारं स्वप्नं दृष्टवा प्रवलचिन्ताक्रान्त चित्तः शान्तिलेश-मपिन लभमानः भूपतेः पितुरनिष्टं शंकमानोऽस्थात्। तदैव राजधान्या आगतवतादूतेनानीयमानं पितुर्महत्या ज्वरदाह-पीडायाः सूचकं लेखमुपलभ्य शोकसंविग्नमनाः हर्षवर्धनः प्रातिष्ठत। अग्रिमेऽन्हि मध्याह्नवेलायामागत्य पितुः समीप-मांप्य प्रबलेन ज्वरदाहेन पीडित जनकं दष्ट्वा उत्कटेनाधिना भग्नमनाः आसीत्। तदापगतहर्षस्य हर्षस्य जननी यशोवती प्रकृष्टपातिव्रत्य विभूतिमती आसन्नमृत्युं पतिं नरपतिमवबुध्य असीमशोकाग्निसमालिङ्गिताङ्गा अवमानितानित्य लौकिकसुखसरित्तरंगा दाहपुंजे स्वात्मानं पातयित्वा दग्धुं कृतनिश्चयासीत्। ज्ञात्वेममुदन्तं हर्षः बहुशो बहुधा प्रणामं प्रणामम् प्रार्थितवान्, मातः जहि कृपामपारां विधायेमम् भावम् सर्वथा। सातिशयं प्रार्थितापिसा स्वनिश्चयं न त्यक्त-वती। उक्तवती च प्रियात्मज, अविधवैवाहं प्राणान् त्यक्ष्यामि वैधव्यानलादयमस्यानलस्य तापः परमशीतलः नातः वत्स, आग्रहीतव्यम् इत्थं कृतार्था यशोवती महिषी दहनं प्रबलं ज्वलन्तं प्रविश्य वह्निसादात्मानं कृतवती। इति कृत्वा

मगमत् ॥ दिवा कृतस्य श्रमस्य शान्तत्वेन तादृशचापलस्य मनस्यभावात् । तदा मनसो व्यवस्थितत्वं संभवति । निद्रामधिगम्य यथाकथंचिद् व्यवतिष्ठते हि मानसं विषयसंततिपरम् । अतस्तादृशेन तेन दृश्यं यथावस्तुस्वरूपमनुभूतिपदं नीयते । तथा हि कस्यचिद् भारतीयविश्वविद्यालयस्यन्तेवासी यश्च एफ० ए० परीक्षायामुपस्थातुकामः तदर्थमधीतवान् । एकस्मिन्नह्नि विश्वविद्यालयं गतोऽनध्यायमाकस्मिकं कस्यचिद् कार्यकारिणः सकाशात् श्रुतिविषयमेत्य तत्राध्यक्षमहोदयेन सूचितं विज्ञापितं चानध्यायविषयकमुदन्तमुपलभ्योक्तवान् । अद्य निशायाम् प्रभातप्रायायां चतुर्घण्टानादनवेलायां निद्राणेन मयोत्स्वप्नायितम् यन्मयाऽद्य बहु सुप्तं विलम्बेन चोत्थीयते । समयविलम्बंविधाय मया विश्वविद्यालये गन्तव्यम् भविष्यति । परं तदुत्स्वप्नात् प्रागजागरणध्वांतापगतः यथार्थ प्रबोधोऽहम् दृष्टवान् यदद्यानध्यायो विश्वविद्यालयस्य भावीति अधुनात्वत्रोपेतोऽपि याथातथ्यमनध्यायीयं श्रुतिपथमुपैमि प्रत्यक्षतः। अतः प्रभातस्वप्नः प्रायेण सत्याप्यते निर्विवादमिदं प्रतिभाति । अपि च मायापुरीयामेकां पाठशालामधिवसन् अध्येतुकामः एकः छात्रः स्वप्नगतो दृष्टवान् प्रत्यूषे यद् जाह्नवी सविधेऽमुकस्थाने पञ्चाशकाधिकैका राजती मुद्रा एकस्मिन् चीवरे बद्धा पतिताऽस्ति । प्रदृश्येदं स गतनिद्रः कृतवान् मनस्तत्र स्थाने यातुं विहिते चेत्थं तेन लब्धं पूर्वोदितं द्रव्यं यथादृष्टमेवं च स साश्चर्यः सन् तमुदन्तं कथितवान् सकलान् तत्साध्यायान् छात्रवर्गान् तत्रत्यान् । एवं च प्रातः स्वप्नस्य प्रायेण तथ्यताऽतोऽप्यनुसंधेया । अपि च बहुविधारामरमणीयतारमणीयेऽनेकतडागह्लदवापीसमलंकृतबाह्यप्रान्तप्रदेशे प्रचुरकृषिफलफलिते प्राज्यराज्यविभूषिते नवनीतकान्तदेह प्रभुजने सार्वजनीनसुखमुदितजनते विविधमण्डनमण्डित,

मनोजवाणलक्षीकृतमानस युवति जनसम्विभूषिते प्रथितवैचित्र्यमुपेयुषि अकालमृत्यु अमुषित भीमगदाऽहृताऽखण्डित पुरुषायुषजने बहुजने कस्मिश्चिन्नगरे कश्चित् श्रेष्ठिसुतोऽष्टादशवर्षदेशीयः रमणीयाननः शोभामचिरजातपरिणयजनितां प्राप्तः बहु विलासविलसितमानसः रतिसुखं सातिशयमनुभूतवान् परिणीतया स्वरमण्या समम्। सापि रतिकेलिकलाकलापाक्रान्त-स्वान्ताऽनवगतविकर्मदुःखदुरन्ता नितान्तशान्तसन्तुष्टस्वान्ता स्वप्रेयसा सार्धं यथाकामं प्रीणितकामं सुरतसुखसन्ततिमन्वभूत् । एवं रममाणयोस्तयोर्दम्पत्योरवसंन्ने मासद्वये कस्यांचित्तमिस्रायामविकलोचित सातसम्भारमिते शयनीये शयाना सा मानिनी कामिनी आमोदवने निद्रासुखे विचरन्ती समस्तप्रमोदभञ्जकं स्वप्नं दृष्टवती यत्तदीय सौभाग्यचिह्नं काचमयं तद्धस्तगतं भूषणं (चूड़ि़केतिनाम्ना प्रसिद्धम्) भग्नमितिहेतोः प्रकृष्टचिन्ता सन्तप्तमानसया तया स्वीयदुर्भाग्यसूचकः स स्वप्नस्तर्कितः। ततस्तन्निशापश्चिमार्धः प्रखरेण दुःखेन नीतः। महाशोकाग्निपुञ्जालिंगितदेहा यथाकथंचिदुत्थाय स्वकीयशयनीयात् कृतमरणनिश्चयाऽऽसीत्, सतितुयाथार्थ्ये स्वप्नस्य। यतः सा पतिव्रतमाचरितवती यथाविधि। एष हि धर्मः मार्गश्च पतिव्रतानामनुगमनीयः इत्थं विचारं विचारं ध्यायम् ध्यायम् मृतप्रायाऽभूत्। श्रावितवती च तद् वृत्तं स्वप्नस्य सखीजनान् पत्युः पितरौ च स्वकीयदृढनिश्चयं च करिष्यमाणंस्वमृति विषयकम्। समाकर्णितेऽस्मिन् वृत्ते तत्सकाशात् पित्रोः शोकमुपगतयोः सतोः तयास्वपति रभ्यर्थितः समाह्वातुं कंचिद विशिष्टं विद्वांसं ज्योतिर्विदम् प्राचुर्येण फलं स्वप्नस्यावबोद्धुम् तादृगन्तर एव सा इतरस्य स्वीयसम्बन्धिनः पञ्चतत्वगतिमाकर्णितवती सा सम्बन्धिनी च मृतधवा जाता इति तथात्वे

तदीयस्वप्नस्यान्यत्र चारितार्थ्यं जातमेव परं न स्वगृहे। तदागतः दैवज्ञोऽपि तदीयभर्तृसमाहूतः समाचख्या एवमेव यद् दुःश्रवोदन्तश्रवणफलोऽयंस्वप्नः। पतिश्चास्याः स्वप्नदर्शिकायाश्चिरायुर्भविता। अनेकेषु गतेषु मासेषु तथैव दृष्ट्वा सा कृतविश्वासासमजनि। इत्यादि स्वप्नस्थले तु शंकितचेतसोऽव्यवस्थितत्या समाधेयम्। एतावानेव भेदः फलमितरत्र तस्य दर्शनमितरत्र स्वरूपतस्तु न मिथ्याऽवर्तताय स्वप्नः मुहुः परिशीलनात् शंकाकलङ्काङ्किते चेतसि सति एतत् प्रभृतयः स्वप्ना दृश्यन्ते। अथ वैधसनैपुणीनिर्मिते विविधायतिततिषु परिणते तत्तन्नियतिनियमिते प्रणीते विस्तृतिं वृहतीम् आभाससारे वस्तुतोऽसारे संसारे जाग्रदवस्थायाम् सत्वेन प्रतीयमानस्यासत्वेन प्रतीयमानस्य च लौकिकस्य वस्तुनः तत्तदिन्द्रियविषयभूतस्य तेषां तेषामिन्द्रियाणां द्वारैव बोधो भवति। स्वप्नावस्थायामपि सतामसतां प्रियदर्शनानामप्रियदर्शनानां हितानामहितानां शुभानामशुभानां स्वप्नानां दर्शनम् जायते। शुभाशुभदैवविलसितेन विलासमुपगतानामिद्रियैरिव प्रत्यक्षमनुभूतानां स्वप्नदृष्टानां पदार्थानां स्वरूपाणि तत्फलानि चाग्निपुराणोक्तदिशा प्रदर्श्यन्तेः—अथादौ दुःस्वप्नास्तेषां दुष्फलानि तदीयानीहितस्वरूपाणि अभद्रनिवारणोपायाश्च कथ्यन्ते। यतोऽकथनीयत्वमश्रव्यत्वं चास्ति तेषामतः प्रथमं तेषामेवोद्देशः। तथाहि दुर्दैवविलीनविहीनसम्पदामुदीर्णदीनताविस्तीर्णविस्तीर्णविपदां मानुषाणां मनांसि प्रखरं व्यथयन्ति दुर्वस्तूनि दुःस्वप्ने दृष्टिमितानि यानि भवन्ति, तानि वक्ष्यन्ते। तथा हि दृश्यमानकले सकले चिरजीविताजीवित सन्देहे देहे तृणानां तरूणां समुद्भूतिः नाभिस्थानादन्यत्र दृश्यमानाऽमङ्गलावहा यतः तृणतरुणामुत्पत्तिः प्रभूता जंगल एव जायते शवदाहोऽपि च मृतकदेहस्य भूमौ निरवननमपि

तत्रैव क्रियतेऽतस्तद्दर्शनमशुभस्य रोगादेश्च सूचकम्मन्यते। नाभौ तु भगवतो विश्वम्भरस्य नलिनोद्भूतिः संश्रूयते मङ्गलास्पदा सा इतो वर्जिता प्रत्युत सुखावहा। मस्तके कांस्यमयानां पात्राणां वा कांस्यनिर्मितानामितरेषां वस्तूनां चूर्णनं वा त्रोटनं स्वप्ने दृश्यमानं न शर्मसूचकं, यतः तेषां शब्दः ध्वनिर्वा तु भद्रबोधकः। आरातिकमङ्गलयात्रादिकृत्येषु तदुपादानात् साशयं सविकाशमाकर्णनात् च तस्य। परं तदीयं त्रोटनं मञ्जनं वा साधारणतयैव दृष्टं जाग्रदवस्था-यामपि न शुभम् लक्ष्यते किं पुनः स्वप्नेऽपि कांस्यानामुत्तमाङ्गे भग्नता शुभास्पदं स्यात्। मुण्डनमन्यस्य स्वस्य वा दृष्टं दुर्दृष्टं भवति दुर्दैवजनितत्वात्, यतः साधारण्येन मुण्डनमभद्रसमय एव कार्यते। यद्यपि विशिष्टयज्ञोपवीतादिसंस्कारसमये यथोचित मुण्डनमीहितं तथापि नासारूप्येन साकल्येन च। दिगम्बर देहवत्वं स्वस्येतरस्यवाऽवलोकनं न शर्मापादकं यतः मांगलिकेषु कार्येषु संस्कारितानां वाससां सश्रृंगारं धारणमिष्यते भद्रदर्शनं, नतु ततोविरुद्धं नग्नत्वम्। मलिनानामम्बराणां धारणं स्वेनेतरेण वा स्वप्ने दृष्टं दुर्दिष्टदिष्टं भवति। न मंगलसम्पादकमीर्यते, दुरितस्य मलिनवर्णत्वेन वर्णनात्। एनसः च दुःखहेतुत्वात्। यमस्य तद्दूतानां च कृष्णवस्त्र-वत्वेन प्रसिद्धेः असुखस्यापि मालिन्येनैव कीर्त्तनात्, सिताकृतीनां वस्तूनां वाससां च शुभ्राणां मंगलरूपत्वेन कथनात् च। स्वकृतं परकृतं वा तैलमर्दनं दृश्यते चेत्तदप्यशर्मस्वरूपवत्वेन दुर्दर्शनं सन्न सौख्यसम्पादकम्। यतः तैलाभ्यङ्गस्य हीनरूपं तथाऽशौचरूपं च प्रतिपादितम्। तथा च स्मृतिः—तैलाभ्यंगे-चितादाहे मैथुने क्षौरकर्मणि यावत्स्नानं न कुर्वीत ता-वच्चाण्डाल उच्यते। एषु चतुर्ष्वपि कृते इति पृथक् सप्तम्तं पदमध्याहार्यं व्याख्येयम्। देहस्य पङ्के दिग्धताऽपि दृष्टा

न कल्याणमावहति । तादृश लेपस्याशुचित्वाद् हीनत्वाच्च दुष्फलप्रदत्वं कल्प्यते । तत्र मृत्तिकासंसर्गादनिष्टतास्फुटा । उच्चप्रदेशात् अधःपतनं दृश्यते चेन्न तदपि शुभावहमधः पातस्याधमरूपत्वेनाप्रियत्वात् स्वरूपत एव तस्यामनोरम-त्वेनानीहालिङ्गितत्वात् च । उत्तमपदात् स्वपदात् च्युतिरव-श्यम्भाविनी वा स्वास्थ्ययोग्या दशा तद्भिन्नायां तस्यां परिवर्तमानाऽऽवश्यकीत्यादिरपशकुनोऽनुमीयते । विवाहोत्सवः स्वस्य वा परस्य विषमभागधेयस्य यदि दृश्येत न तदीयां युक्तां सौख्यदशां कथयति । प्रत्युत दीनां हीनां कष्टावस्था-मनुमापयति । अन्यतरस्य मृतिः वा मृतितुल्यं कष्टं फलति । यदि वाऽऽधिजनयति वा मनोमालिन्यम् असदहष्टमनुरुध्या-व्यवस्थितेन मनसा तथा दर्शनात् । अल्पतमं सुखं परिणय-जन्यमनुभवनीयं स्वप्ने भवेच्चेत्तदल्पतमस्य फलस्य तद्हेतुना स्तोकतमेन सुचरितेनैव जननात् वक्तव्यम् । सुप्तौतादृशमनु-भूतन्न तु तत्वतोलब्धमर्हं स्थायिरूपतया यथा जागृतौ । सुखरूपं वा मङ्गलस्वरूपं दृश्यं कथं तद्विरुद्धं दुःखेऽकल्याणे वा परिणमतीति चेदुच्यते, ज्ञानावरणेन हेतुना अदृष्टमांद्य सहायमुपहतप्रज्ञानेन पुंसाऽतत्वतः वस्तुस्वरूपावलोकन पुरस्सरं स्वान्यरूपेण भासमानं सत् यत् दृश्यमानं तत्तदितररूपे फले परिणमति । यथा मृगः मृगतृष्णिकां पश्यन् तपतौ मध्याह्ने वा तदितरस्मिन् समये तृषार्तः सन् ग्रीष्माधिव्याधि-पीडामगणयन् सलिलबुध्या सिकतां जानन् पातुं जलं व्यवस्यति धावति परं तत्र गत्वा यथार्थं वस्तु कीलालमना-लोकमानः तद्बुद्धिः भासमानजलरूपा, सिकतारूपेऽर्थेसत्वेन परिणमति । इति रीत्या जाग्रदवस्थायामपि दृश्यते यदव्यव-स्थिता बुद्धिः असद्रूपेण भासमाना कालान्तरे सद्रूपेण तद्भिन्ना-कारेण प्रतीयते । सुप्तावपि कश्चिद् कस्यचित् प्रियतमः

तद्वियोगजनितं दुःखमनुभवन् च निर्णयन् यन्न समागमो भावी त्वरितं मत्प्रियस्येति रुदन् विलपन् पुनः स्वप्ने तादृशमेव प्रियसाक्षात्कारजं प्रौढ़ं हर्षमनुभवति यथा तथा विवाहहर्षः दुःखरूपे समन्वेति इति प्रकारेण न प्रागुदितशङ्काकलङ्कावकाशः। मनःप्रियं गीतमप्याकर्णितं न शुभाय तद् हि दुष्फलापादकमस्ति। रोदनरवेऽमङ्गलजनिते तत् परिणमति इति प्रायशो दर्शनात्। लोकेकार्यं दृष्ट्वाकारणानुमानस्य सर्वसम्मतत्वं प्रसिद्धमेवावलोक्यते। तंत्रीप्रभृतिवाद्यस्य द्वारा यद् विनोदनं मानसेनानुभूयते सुप्तौ तदपि दुःखेपर्यवस्यति। तादृशानुभवोऽपि लोकप्रसिद्धः मङ्गलरूपस्य वस्तुनो दृष्टस्यामङ्गले वाऽसुखे वस्तुनि कथं परिणाम इति चेदुच्यते। परिपक्वस्य पयसः दधनि परिणतिः अम्लस्य दध्यादेः द्रव्यस्य संयोगाज्जायते यथा च दृश्यते तथा प्रकृतेऽपि उभाभ्यांमंगलामंगलाभ्यामितरद् दुरदृष्टं वा स्तोकतमं शुभादृष्टं वीजं मन्तव्यम्। द्वितीयन्तु कारणम् इन्द्रियोपसंहारपूर्वकं मनोऽव्यवस्थितिः। तृतीयं वीजन्तु जागृतौ तत्तद्विधानुभवः। दोलायामधिरोहणमपि दृश्यमानं सद् दुर्दृश्यमेव भवति। दुष्फलस्यमृतकदेहाधिरोहणरूपनिःश्रेणेः सूचकत्वम् बोध्यम्। तथाविधसाक्षात्कारस्य सौलभ्येन प्रतीयमानत्वं जागृतौ स्पष्टमेव दृष्टिपथं यातिलोके वा तदधिरोहणं पूर्वोदितनिःश्रेणिसम्मानमाधि व्याधिमागम्यमानं सूचयति। सादृश्यस्य समानार्थबोधने सामर्थ्योपेतत्वं सुतरां प्रसिद्धम्। एवमिहापि यथादोलायामधिरोहणं तथा तादृशनिःश्रेण्यामपि। कमलानां रक्तानां च लोहमयानां पदार्थानामर्जनममङ्गल्यम् तथाहि कमलपदेन हृदयमपि गृह्यते हृत् पुण्डरीकं हृत् कमलमित्यादि प्रयोगदर्शनात्। हृदय च स्थानं प्राणानां प्राणानामेकत्रीकरणं तु देहवियुक्तानामेव संभवितुमर्हति। अतोहस्तपादादिनिकायकायस्य वियुक्तिरेव-

कल्प्यते पद्मानामर्जनस्य दर्शनात्। लौहवस्तुदर्शनमपि अशुभं गमयति यतः लोहस्य कृष्णवर्णत्वमस्ति। असितस्य च वस्तुनोऽभद्रात्मकत्वं मन्यते। श्रूयते च लोके। किञ्च क्रूरग्रहस्य शनेः विषमराशिस्थितस्योपशमार्थमपि तदुपादानं श्रेयस्करं मन्यते ज्ञाततदीयतत्वैः दैवज्ञैः। अपिच यमीयो दण्डोऽपि आयस एव तस्य च सर्वथा अविकलभयावहत्वेन दुःश्रवत्वं दुरुपपादत्वं चास्ति। विसर्पविषाणां सरीसृपाणां सर्पाणां मारणमवलोक्यमानम् कल्याणं नितरां निवारयति। शेषस्य भगवतोऽनन्तस्योरगरूपेणावतारसत्वात्। सौमित्रिः दाशरथिरपि शेषावतारएवासीदितिनिर्विचिकित्सं भाति इति हेतोः भगवतो व्यक्तिभङ्गोऽयम् शर्मभङ्गं ख्यापयति। सुमनांसि सुमनः प्रियाणि विबुधसविधिविविधार्चनासु प्राधान्येनोपयोक्तव्यानि भवन्ति। अपि च कुसुमानि मनोहराकृतीनि सकलेषु मंगलकार्येषु सर्वथोपयुज्यंते आवश्यकत्वेनापेक्ष्यंतेऽतः कुसुमभंगदर्शनमपि अभद्रसूचकं मन्यते। भूमिरुहाणां भंगोऽपि दृष्टः सन् तथैव तरुस्वरूपतया निखिलावयवनिकायविशिष्ट-कायात्मककायिनः नाशम् अवबोधयति। चाण्डालदर्शनमपि तत्र तथैव ज्ञातव्यम् दुष्फलम्। यतो हि स पापकर्मा, तदीय-प्राग्जनिविहितदुश्चरितादिदुरितान्येव कारणातां भजंते तद्देहाप्तौ। पिहितसुकृतदुरितकर्मसु हिंसात्मकक्रौर्यात्मकेषु तथेतरनिकृष्टेषु च तेषु अप्रतिबंधेन प्रवृत्तिः चाण्डालस्य सुप्रसिद्धा वर्तते। वराहस्य शुनः रासभस्य क्रमेलकस्य चेक्षण-ममंगल्यम्। इहान्त्ययोर्द्वयोरारोहोऽपि दैवदौर्बल्यसूचकः। एषु द्वितीयस्तुश्वा अदमस्य यमस्य प्रखरकार्यकारित्वावहः, तद्दौत्यकर्मणि अशर्मणि नियुक्तः। अन्त्यद्वयस्य हीनवाहनत्वेन प्रसिद्धेः सर्वसम्मतत्वमस्ति। निकृष्टतरनिकृष्टतमवस्तुभोजी दराकारशाली प्राज्याभोज्याशुचिभोजी च प्राथमोऽस्ति।

खगानां मांसानां च भक्षणमपीक्षितं सदशरणं सुखस्य, यत् आत्मनः पक्षिरूपतया वर्णनं देहगतस्य वर्तते इति बहुषु आर्षग्रन्थेषु स्फुटमुपदीप्यते । अतस्तद् भक्षणमात्मनो नाशमन्यस्य वा कस्यचित्पातं ख्याति । इत्थं मांसमपि मृतस्यैव देहिनो देहस्य लब्धुमर्हति । अनन्यसुखदायिन्या जनन्या नियतदरे उदरे प्रविष्टिः दृष्टिमिताऽनिष्टं द्रष्टुरन्यस्य वा बोधयति । यतः मादुरुदरे प्रवेशः पुनर्जननाय पुनर्जनिश्च देह विगमादूर्ध्वमेवेति देहपातो दैवनियतः सुतरां तेन सूचितो भवति । एवं चिताधिरोहणं प्रौढ़प्रखरपरुषशुग्वृहंणम् परम-भीतिप्रदस्मरणम् सर्वथा दुर्द्दश्यं दृष्टिपथं यातमपि प्राग्वदेवा-निष्टिहेतुः । पौलोमीपतिकेतुपातः अनर्थनिपातः दर्शितः अस्ति राज्ञः पातसूचकः । राज्यचिह्नं ध्वजारोपणमनभिहत प्रतापं सुप्रसिद्धम् । इन्द्रश्च नृपपर्यायः धरेन्द्रादिषु प्रयोगेषु दृश्यते । धरायामिन्द्र इवेत्यर्थापेक्षया धराया इन्द्र इत्यर्थस्य लघुतरत्वमस्ति । इत्थं च नरेन्द्रभूमीन्द्रादयोऽपिशब्दा व्याख्याताः शशिनः अभिमताह्लाददायिनः प्रियभावुककौमुदीशालिनः कुमुदविकासिनः औषधीनां प्रकाण्डशक्तेः प्रकाशस्य च प्रदा-यिनः तथा दिवानाथस्य प्रकृष्टतमप्रकाशसनाथस्य चाभि-पतनन्न शुभावहम् । राज्ञोऽश्रेयोहेतुश्च वर्तते । तद् द्वारा प्रजानामपि भद्रस्य नो बोधकम् । अनयोरुभयोरपि नृपस्वरू-पत्वेन प्रतिपादनं प्रसिद्धम् । स्वर्गीयाणामन्तरिक्षोद्भवानां भूमिप्रभवाणां चोत्पातानामालोकनमपि प्रागिवास्ति अमंग-लास्पदम् । उत्तमजातीयानाम्मध्यमजातीयानां चाधमजाती-यानां जन्मभाजां वा सर्वविधानामेवैषामहितसूचनं स्पष्ट मववुध्यते । हृद्यं वस्तु दृष्ट्वा हृदयं समाश्वासितं प्रहर्षोत्फुल्ल-मिव यथा जायते तथा अहृदयप्रियं दृश्यमवलोक्य स्वान्तमशान्त मविश्वासोपहतं सभीकं सद्दुर्निमित्तं सूचयति हीनादृष्टप्रेरित-

त्वात्। विबुधानां वराविबुधानां विबुधसमानानांसमानाना-माचार्याणां च महीश्वराणां कोपः साटोपः दृष्टः प्रकृष्ट निकृष्टादृष्टभासितदुष्फलावसानं स्मारयति। उक्तानाम-खिलानामेषां प्रबलाविकलशक्तिशालित्वमस्ति। तेषां कोपस्य प्रौढ़ सामर्थ्योपहितत्वं हि सुप्रसिद्धं लोके दृश्यते। असा-धारणपुण्याः महामहिमशालिपुरोगण्याः शरण्या इमे संति। अतएवैभिः यथापराधं दण्डितो जनो न दण्ड्यते दण्डन दक्षिणेन दक्षिणाधिपेनापि। तैलमपि मर्दितमीक्षितं वाऽ भव्यं भावयति। इदं हि कीनाशसंबंधिषु अनुष्ठानविधिषु यमप्रियेषु मारणादिषूपयुज्यते। तैलाभ्यक्तोहि देवकार्य-विधानानर्हः। तदुक्तं प्राक्—तैलाभ्यङ्गे चितादाहे मैथुने क्षौर-कर्मणि। यावत्स्नानं न कुर्याद् वै तावच्चाण्डाल उच्यते।

कृशरायाः तण्डुलमिश्रितद्विदलायाः दर्शनं स्पर्शनं मर्दनं च दुर्निमित्तापादकम्। सा हि बाहुल्येन गदार्तैर्मानवैर्भु-ज्यतेऽतः स्वस्येतरस्य बाऽशिवं तेन दुर्निवारम्। नर्तनं हसनमेतदुभयमपि हर्षोत्साहजन्यं प्रायो दृश्यतेऽतस्तद् द्वयमपि तत्प्रतिकूले दुर्दिष्टमूले फले परिणमति। प्राग्व-र्णितमुत्तरमेतस्य परिवर्तितफलस्य सविस्तरम्। स्रोतोभिः प्रोह्यमानायाः सरितः वा स्रोतोयुतस्य तद्भिन्नस्य जलाशय-स्याधोगमनं दृष्टमपि तथैवोत्तरोत्तर रूपेण वर्धमानस्य च वर्तमानस्यायुषः प्रवाहभङ्गमुत्तरवर्धमानानर्हतां च ध्वनति। यशसः सुखस्य च कृतौकसः तादृशमसदृशमोकसो-नाश विलीनाखिलाशानाशं गमयति। प्रवाहवत्वं तु स्रो-तसः आयुषः सुखस्य यशसश्च समानमीहमानं दृग्गोचरतान्नि-तरां याति। गोमयमिश्रितेन वारिणा पङ्कसम्पृक्तसलिलेन वा मसीसंसृष्टेन तोयेन स्नानमालोक्यमानं वा स्वयं विधीय-

मानं शुभमशुभे परिवर्तयति यदि एकाकारेण स्नानं सकलस्य कायस्य क्रियते, इदमपि समग्रस्यकाकृतौ स्थितस्य देहस्य वा श्रेयसः क्षतिं समाप्तिं यशोमालिन्यं मनोमलीमसत्वमारोग्यवैकल्यं च बोधयति। यतो गोमयतोयस्य पङ्ककलङ्कितजलस्य मसीसलिलस्य च मलिनात्मकत्वमस्तीत्यतः मालिन्यजनकत्वमेव फलमापाततः निर्धार्यम्। गोमयलेपकार्यं समाप्यैव गोमयमुदकेन परिमार्ज्यते। मृदुदककृत्यावसान एवपङ्कमुदकेन मसीश्रपि मसीकार्यान्तेनिवर्त्यंते इति निर्विवादमेतदुक्तम्। कुमारीणामनूढानामक्षतयोनीनामालिङ्गनं स्वेन भिन्नेन वा सम्पाद्यमानमीक्ष्यमाणं चेत्तद्दुरित प्रापयति तस्य धर्मशास्त्रे निषिद्धत्वात्। विधिमंत्रनिषेधनामधेयार्थवादानां पञ्चनामेव वेदवाक्यावयवत्वविधानात्। अहरहः सन्ध्यामुपासीत, मंत्राश्चाग्न्याधानादीनाम्। नानृत वदेत् परदारान्न गच्छेत्, जातस्य पुत्रस्य दशमेऽहनि पितानाम कुर्यात्, स्तुतिनिन्दाफलकवचनमर्थवाद वचनम्।इत्येषां पञ्चानां क्रमश उदाहरणमुखेन प्रतिपादनं शास्त्रविहितम्। इत्थमेव कुमारीन्न गच्छेत् इदमपि निषेधान्तर्गतं वाक्यम्। किञ्च अष्टवर्षा भवेद् गौरी नववर्षा च रोहिणीत्यादिना देवीरूपतया कुमारीणां कथनमस्ति। सत्वरजस्तमोरूपायाः महाकाली महालक्ष्मी महासरस्वतीरूपाया देव्या अपि कुमारीत्वेन विधानमस्ति। इति हेतोरपि श्रद्धास्पदत्वमस्ति कुमार्याः। अन्योऽन्यन्नरमैथुनमपि दृष्टं सत् सुचरितं प्रतारयति। पूर्ववन्निषिद्धिमस्ति तस्य विपरीतरतित्वात्। रतिशब्दो हर्षपर्यायोऽतः प्रमोदविपर्ययः फलम् निष्पद्यते तद्दर्शनजनितम् पुण्यक्षयकरम्। स्वेषामङ्गानां च्युतिः क्षतिः पृथग्भूतिर्द्दक्पथं याता समुद्भावयति सद्दक्षं भविनं प्रभाविनं शिवापेतमधन्यम्। तस्येक्षणस्य क्षयरूपत्वेन दर्श-

नात्। विरेचनं वमनञ्च दुष्फले पर्यवसन्नम् भवति मलस्य त्यक्तत्वात्। मलंहि त्यज्यमानं दृष्ट मायुषः क्षयं वा गदार्ति व्यनक्ति। आयुषो वलाधीनत्वं बलस्य च मलाधीनत्वमित्य संशयम्। दृश्यते हि लोके आयुर्वेदे च प्रागुदितदिशा मलस्य राहित्यं विकृतत्वं च विसूचिकाख्यो गदो निगद्यते। यश्च प्राणधारणसामर्थ्यं दूरेऽपहरति मृतिसमानाममानां पीडां वा जनयति। याम्यायामाशायामभिगमनमभिदृष्टम्-तल्लजं श्रेयोऽभिहन्ति। तस्यादिशोयमसंबंधित्वाद् यमस्य च नरकस्वर्गादिफलसाधककर्मपरम्परापरायणानां प्राणिनां मृत्योरसाधारणकारणत्वमस्ति। यमदेवताया दक्षिणस्या दिशोऽशुभत्वात्, तत्रगमनम-शुभप्रदम्मृतितुल्यं कष्टं सूचयति। तस्या दिश आभिमुख्यं शुभकर्मसु निषिद्धं सर्वथा वर्तते। तथाहि नित्ये काम्ये च कर्मणि भोजनादिविधौ च शयनविधाने तदभिदिशं पादप्रसारणं निषिद्धम्। तस्यामेव काष्टायां महामहिमपरमपुण्यतपःशाली आकृतिमद्धर्ममाली सकलजनसर्वविधदुष्कृतदुष्फलविचाली नहुषस्य सर्पाकृतौ परिवर्तने सुविस्तरप्रकटितलोकोत्तरप्रभावाली महामुनिरगस्त्योऽपि नाद्यापि समागच्छति तस्यां दिशि गत्वा। यस्यानुल्लंघनीयामाज्ञान्नालंघयद् विंध्याद्रिरपि। यस्य च महर्षेः त्रिभुवनवंद्यमखण्डय यशोऽगाधोदधिसलिल सलीलपानजातं विश्रुतम् अस्ति। व्याधिनाऽभिभवोऽपि दृष्टो ऽभिभवं दर्शयति। अभिभवात्मकत्वाद् व्याधेरनिष्टत्वाच्च। फलानामुपहानिरवलोकिता हानिमुत्कटां वोधयति। प्रथितमेतल्लोकेऽनुभूतं च यत् फलभङ्गं सुप्तौ दृष्ट्वा कस्यचिदपि फलस्य वैकल्यमनुभूयते। फलानि वहुविधानि संति। सुतः धनम् विशिष्टमीप्सितं विद्याप्तिश्चेत्यादिमानि। सदवस्थायां फलमुपलभ्य किमपि फलं प्राप्यते सुहृष्टतर-

मेतल्लोके। फलपदेन वृक्षादिप्रसवस्य मनोरथस्य च सुग्रहः कार्यः। धातूनां कार्तस्वररजतप्रभृतीनां भेदनमपि न मङ्गलावहम्, रोगाक्रान्तिं निर्द्धनतां च सूचयति। निर्धनता तु एतेषां धातूनां भेदेन स्फुटैव, शरीरान्तर्गता धातवोऽपि सप्त सन्ति। रसासृङ्मांसमेदोऽस्थिमज्जा शुक्राणि धातवः। एषामक्रमेण वर्तनं वाक्षयोऽपि ध्वन्यते। एतेषां वैपरीत्येन वृत्तौ रोगोद्भूतिराशंक्यते। गृहाणां पतनमपि न श्रेयो जनकम् गृहपदमाश्रयार्थं स्थानार्थं चास्ति, प्रसिद्धेः तथैव प्रयोगदर्शनात्। अतस्तदुभयभ्रंशः सूच्यते। शरीर व्याधिमंदिरमित्यादि प्रयोगदर्शनात् शरीरार्थोऽपि गृहस्य पदस्यास्ति। अतः तद् हानिर्वा तदीयः पातोऽपि व्यज्यते। गृहसम्मार्जनमपि न लक्ष्मीवर्धकम् यतः सम्मार्जनेन विस्तृतानि बहूनि वस्तूनि एकत्रीकृत्य बहिष्क्रियंते। प्रायेणैवमेव लोकानुभवात्।

पिशाचैः सह क्रीडनममङ्गल्यम् तेहि क्रूरकर्माणः यमदूताकारसमानाकाराः क्रीडनं च तुल्येष्वेव वरमतः द्रष्टुः तत्सादृश्यं वा तद् वशंगतत्वं स्फुटं द्योत्यते। पिशिताशनैः सार्धमपि क्रीड़ा तथैव। क्रव्यार्थिनो हि आममांसंग्रीहीतुकामाः चेष्टमानाः रममाणा दृश्यंते पलमेतदीय भक्षितुमिति स्पष्टम्। अन्त्यजैः समं विहृतिरपि तथैव ज्ञातव्या। चाण्डाला हि कृतान्त किंकराकृतिकृतिमन्तः कालकालाकाराः प्रकटितप्रकृष्टमदमानसविकाराः प्रयोज्यंतेस्मवधकर्मणि प्राक्काले। भोजं धाराधीशं हन्तुं मुंजेन विसृष्टाः श्वपाका एव। चारुदत्तं हिंसितुमना आर्यकनृपोऽपि समाज्ञप्तवानन्त्यजानेव नृशंसान् तद् वधायेत्यादि सुस्फुटं वर्तते मृच्छकटिके दृश्यकाव्ये शूद्रककृते। वर्तमानेऽपि काले विकर्माणोऽधर्माणः चाण्डाला एव प्रवर्त्यंते हिंसात्मकेषु प्रखरदुःखप्रभवहेतुषु च कर्मसु। तेहि परपीड़ा

हानिजन्यापुण्या अशरण्या अधन्याः परमारणपीडनप्रतारण यातनावृत्तिम्मन्याः संति इतस्तैर्विहारः कुतो नाभद्रात्मा। वानरैर्विहारोऽपि सर्वथा सुनिषिद्धः। सह्यिरमणीयाकारशाली विचाली सुस्थितिविकाली वर्तते। परेभ्योऽभिभवो दृग्गोचरश्चेत् परेभ्यः परिभावं व्यापयति। यतः सपत्नाः नियतमसौख्याशिव-चिन्तननिरताः प्रयताश्च भवन्ति वहुविधक्लेशकारणायाम्। अरीणां नामधेयं दर्शनञ्चामुदो हेतुः नकश्चिदपि स्वारिं दृष्ट्वा मोदते न च पारयति तत्सविधे स्थातुं तन्नामस्मरणमपि दुःखाकरं कुतस्ततोऽभिभवः सुसहः स्यात् स्वप्नेऽपि। अतस्तज्जा-तमसुखं कल्प्यते। द्विषत आगतं व्यसनमपि दृष्टं हेतुकं-रदृष्टि सद् अभद्रम्। स्वस्य कषायरक्तरक्तानां वाससां धारण कर्तृत्वमपि दुःखावहं वा रोगजनिकर्तृकम् मृतिसन्देशवोध-कमपि भवितुं शक्नोति। भोज्यानामुपभोग्यानामर्थानां लौकिकानां सुखानुभवे कारणतामितानां पृथग्भूतिः वा असूतः इद्रियविषयानुकूलभोगानां दुष्फलत्वेन कल्पितुं शक्यते। रक्तं च वर्णं प्राज्ये असह्ये गद एव प्रसज्यते। गदो वाहुल्येन देहप्राणवियोगदः प्रसिध्यति किञ्च स्त्रीणां मृतकदेहाः श्मशाने नीयमानाः समाच्छादिताः रक्तैरेव वासोभिः क्रियंते। कस्मिं-श्चित्प्रान्ते पुंसामपि मृतकशरीराणि लोहितेनैव वसने-नाच्छाद्यंतेऽतस्तानि सर्वथाऽमङ्गलानि मृतिसूचकानि वक्त-व्यानि। चतुर्थे सन्यस्ताश्रमेऽपि सकलविधाः भोगाः त्यज्यन्तेऽतः प्रागुक्तं फलं सम्यगनुमेयमेतत्स्वप्नस्य। तद् वर्णवस्त्रधारणपुर-स्सरं क्रीडनमपि तथैव हतभाग्यसूचकत्वेन निन्दनीयम्। तैलपानं तैलावगाहश्चेत्येतद् द्वयमप्यागामिनीनाममन्दविपदा-माख्यायकम्। तैलं जागृतौ पीयमानन्नरन्न गमयति भद्रमिति प्रथिततरं लोके कुतः स्वप्ने पीतं भद्रास्पदं भवेत्। प्रायस्ति-

लस्नेहं पीत्वा मृत्युमश्नुते । तिलस्नेहे हि मृतकशरीरपिण्डमखण्डं पात्यते प्रतीक्षितुं कंचित् कालं तदवस्थायामेवावस्थापयितुं रक्षितुं च विकृतेः। यथा रामायणे वाल्मिकीये प्रोक्तम्। गते पञ्चत्वं दशरथे नृपे भरतस्य स्वमातुलगेहे वास्तव्यस्यागमनं प्रतीक्षमाणाः सचिववर्गाः पातयामासुः मृतदेहं भूपतेः तैले विकृतिं तदीयामाशङ्कमानाः अतस्तिलस्नेहे स्नानं दुर्दृष्टं भूतिमभिभावयतितरान्नितराम्। रक्तमाल्यनिर्मितमालाधारणं लोहित चन्दनानुलेपनं च द्वेऽप्येतेऽमङ्गलप्रदे। मृत्योः सन्निहिततमे काले पशोर्गलप्रदेशेहिंसायाः यज्ञीयायाविधानं सम्पादयितुम्, लोहित स्रग्धारणं रक्तानुलेपनं च विधीयते सुप्रसिद्धमेतत् लोकेऽनुभवितुम् शेमुषीजुषामज्ञानध्वान्तमुषाम्। प्राचीनकाले भूपाला अपीमां सरणिं रक्षितवन्तः। अपराधिनः प्राणदण्डकाले रक्तमाल्यानुलेपनधारिणः कारितवन्तः। मृच्छकटिके हि प्रकरणग्रन्थे दृश्यकाव्ये चारुदत्तं धृतरक्तमाल्यानुलेपनम् घातयितुकामः सुचरितमतौ वामः तत्रत्यः प्रजापालकः आर्यकः कारितवान्। विस्तृतिभिया नाधिकं दीयतेऽत्र तत् सविस्तरम्। अग्निपुराणोक्ताश्चैते दुःस्वप्नाः सर्वथा कात्स्न्येन परमाऽधन्याः नगण्याः कथमपि सुकृतकृतशुभकथायां हृदयप्रियायां प्राणिमात्रापेक्षितायामिति तत्कथनमपि श्रेयो निवारकमधन्यतरम् कथमपि न चर्चनीयम्। दुर्नियतिबोधकं प्रतिकूलं स्वप्नं दृष्ट्वा नोत्थातव्यम् यथासाध्यं यतनीयं भूयोऽपि स्वप्तुम्। चेत्स्वापो न सम्भवेत्तर्हि अमङ्गलभङ्गोपायाः परमपुण्यमहाकायाः वृजिननिवारणनिकायाः प्रदर्श्यंते। प्रातरुत्थाय स्नानं विधायार्चनीयाः सविधिद्विजन्मानः वेदवेदाङ्गाध्यायिनः श्रुतिविहितानुष्ठानकारिणः सदसद्विवेक सम्पादनविधायिनः विशुद्धक्रियाः सत्यन्याय्यार्थप्रियाः।

किञ्चतिलतण्डुलयवादिमसामग्रीविधानपूर्वकमग्निहोत्रं विधेयम् च हरिहरार्कगणपतिदुर्गाणां पञ्चानां देवानाम्मध्ये कश्चिदेकतमोदेवः स्वेष्टदेवानुसारमभ्यर्चनीयः स्वस्येष्टदेवस्य स्तुतिपाठः पुरुषसूक्तादिपाठः जपश्च विधेयः सविधि । अपिच वादरायणेन महर्षिणानिर्मितेमहाभारते शान्तिपर्वणिभीष्मयुधिष्ठिरसंवादे "गजेन्द्रमोक्ष" स्य प्रकरणेऋषिः शातानीकः दुःस्वप्नदर्शनस्य विनाशनंकारणं, दृष्टैः दुःस्वप्नैर्जन्यानां दुष्फलानां च निवारणं कारणं महात्मानं शौनकमृषिं पृष्टवान् । ततः पृष्टः स तमुक्तवान् । भो शतानीक महात्मन्, निर्मत्सरोधर्मेस्थिरो युधिष्ठिरः भीष्मप्रतिज्ञंरिपुभ्यो भीष्मं धर्मभृतां श्रेष्ठंवीरप्रवरं जितेन्द्रियं भीष्मं पितामहममुमर्थं ( दुःस्वप्नविनाशकं हेतुम् ) पप्रच्छ । सः भीष्मश्च आद्यं पुरुषमीशानं पुरातनमृतमेकाक्षरं व्यक्ताव्यक्तं सनातनं सतोऽसतश्चविश्वात् परमव्ययमनन्तमीश्वरं

परमात्मानं विष्णुं प्रभुं स्मृत्वाऽअवदत्--

नमोब्रह्मणे, नमः परमात्मने, नमो नारायणाय, ओंनमः, एषां मध्ये एकोऽपि मन्त्रः सर्वार्थसाधकः दुःस्वप्नविनाशकोऽप्यस्ति । मानवः प्रातरुत्थाय ईशं ध्यात्वा मंत्रमिममेव जपेत् । इतिकृत्वा दुःस्वप्नदुष्फलं विलीयते । निशिशयनात् प्राक् चानेन मंत्रेण हरिः परमात्मास्मर्तव्यः नन्तव्योध्यातव्यश्च । तेन कथमपि न दुःस्वप्नाः दृष्टिपथं यास्यंति । शान्तिपर्वणि धार्मिकवरः अजयः जनमेजयोऽपि राजर्षिः वैशम्पायनमृषिं महात्मानं पृष्टवान् भगवन् दुःस्वप्ननाशनं पुण्यं प्रियं कारणमहं भवत्तः श्रोतुमिच्छामि कृपया वदतु भवान् । वैशम्पायनेनापि ऋषिणा जनमेजयं प्रति पूर्वं एव विधिः

तन्निवारकः परमात्मने नमस्कारः तस्यैवस्मरणं ध्यानं च एतदात्मक उपदिष्टः। भीष्मपितामहेन च ततः युधिष्ठिरं प्रति परमपूतं भगवतो जिष्णोः विष्णोः अद्भुतकर्मस्वरूपं "गजेन्द्रमोक्ष" प्रकरणम् प्रोक्तम्। तत्र हाहा हूहू नामको गंधर्वौ महर्षिणा देवलेन शापं गमितौ आस्ताम्। तयोः पूर्वः हाहाः दुरात्मा गजेन्द्रयोनिम् अपरः दुरात्मा हू हू श्च भयानकस्य महा प्रबलस्य ग्राहस्य योनिं प्राप्तवान्। एकदा गजेन्द्रः परया तृषया पीड़ितः करेणुभिः सहितः तत् प्रफुल्लपुण्डरीककल्हारेन्दीवरं परमरमणीयम् अमृतायमानसलिलं सरः, पयः पातुं गतवान्, यत्र तस्य प्रतिद्वंद्वी प्रतिस्पर्धी ग्राहोन्यवसत्। तदन्तः प्रविष्टः जलं पिबन् स करी ग्राहेण तेन गृहीतः। ग्राहस्तु गंभीरजलं प्रति आकर्षति करिणम्, करी तु तटं प्रति समाकर्षति ग्राहम्। तदामरणशंकापन्नः असह्यांपीडां वहन् करी पूर्वं प्रतिपादितेन ईश्वर स्मरण नमन ध्यानात्मकेन मंत्रेण परमात्मानं प्रभुं हरिं हृदये धारयन् जगत्स्वामिनमेव स्वस्वामिनं मत्वा आहूतवान्। ततो दयामयः परमेश्वरः स्वभक्तार्तिहारी हरिः गजस्यार्तनादेन सत्वरं तत्रोपस्थितः स्वकराम्बुजेन स्पृष्ट्वा तौ समापितायोधनौ कृतवान्। भगवतः सर्वंकरस्य करकमलस्य स्पर्शमित्वा तौ स्वीयां गंधर्वयोनिमुपेतौ परमात्मानं विभुं जगन्नाथं नत्वा स्तुत्वा स्वधामनी गतवन्तौ। इत्थं च 'गजेन्द्रमोक्ष" प्रकरणेन महामुनिना व्यासेन कथितेन उपसंह्रियते यत् "गजेन्द्रमोक्ष" स्य पाठेन सकलानि दुरितानिक्षयं यांति अनिष्टानि च पलायंते। दुःस्वप्नदर्शनमपि विनश्यति। दृष्टानां च तेषां दुष्फलानि नितरां विलीनतां यांति। अतः तस्य पाठः नित्यं विहितः अतिशयसमृद्धेः सुखस्य च सर्व विधस्य विधायकोऽस्ति। इतिनिश्चेतव्यम् श्रद्धाविशुद्ध मानसेन जनेन।

अथ त्रियामाया यामे प्रथमे दृग्गोचरीकृताः स्वप्नाः संवत्सरान्तः विपाकं दर्शयंति द्वितीये यामे दृष्टास्तु षड्भिर्मासैः फलमुपपादयंति तृतीये तु तस्मिन् ईक्षिता विपाकन्नियतं दुर्नियतिनियमितं त्रिभिर्मासैरुपदर्शयंति। चतुर्थप्रहरे दृष्टास्तु पक्षमध्ये फलवन्तो भवंति। उपदर्शितारुणकिरणस्यारुणसारथेरुदये तु दृष्टिमितास्ते दशाहान्तर्गतफलेन फलिनः सद्यः फलास्त्वरितफलाश्च वाच्याः। प्रतिप्रहरं यथास्थिति मानसीं व्यवस्थितिमपेक्ष्य प्राक् प्रोक्तं फलमुपवर्णितम्। अग्रे अग्रे प्रहरे यथाक्रमं मानसं व्यवतिष्ठतेऽतस्तद् विपाको यथा प्रहरं भेदमुपगतोऽवश्यम्भावी। सति बाधके शुभे प्रबलेऽदृष्टे सति तु ते विपाका अल्पायंतेऽपि चाभावमुपगच्छन्तीति ज्ञेयम् एकस्यामेव निशायामशुभः शुभो वा स्वप्नोदृष्टश्चेत्पश्चाद् दृष्टः तत् फलेन युज्यते न तु प्राग्दृष्टः तथानुभूतिदर्शनात्। पश्चादवलोकिते शुभावहे प्रशस्ते स्वप्ने दृष्टिपथमुपगते तु न स्वापस्तदनन्तरं विधेयः। अथ हितायतयोऽशुभेतराकृतयः सुस्वप्नाः कथ्यंते अग्निपुराणोक्तरीत्यैव। शैले प्रासादे नागेऽश्वे वृषभे चारूढं स्वं पश्यन् प्रशस्ताय प्रियाय कामाय कल्पते। प्रशस्यानीह्येतानि स्थानानि। अमन्दानन्दाप्तिः प्रौढयशसोऽधिगतिः प्रकृष्टपदयातिश्चोच्चस्थानप्राप्तित्वेन व्यवह्रियते लोके। इमानि स्थानानि भव्यरूपाणि उच्चावचानि विदितानि सति शिवेशः शिवो हि शैलमधितिष्ठति सुमनः प्रियाः सुमनसोऽपि तमधिवसंति। तत्रैव वसंतः सिद्धाः याथातथ्येन बोधमुपगतवन्तः विगतमदमानाः शिवं भजमानाः अमरसायुज्यं देहविगमादूर्ध्वम् प्राप्तुं पारयंति। पर्वतोर्ध्वभूमयो हि देवभूमय इति निश्चप्रचम् वर्तते। तत्राधिरोहणं दृष्ट सत् कुतो न परमश्रेयसो हेतुःस्यात्। प्रासादस्तु दिविषदां च भूमिपालानां प्रजापालननिरतानामैश्वर्यभोगासक्तस्वान्तानां

वासस्थानं निगद्यते। तदुपर्यारोहोऽमरसंबंधिनं महीन्द्र-संसर्गादुपागतं च प्रमोदमुच्चपदलाभञ्चावगमयति। यत् विबुधप्रसादद्वारा, धराधीशासाधारणकरुणावलाच्चैव महत्वलब्धेरनुभवसिद्धत्वात्। गजेन्द्रोवाहनमैन्द्रीपतेरिन्द्रस्या-भ्रमुवल्लभोधवलमनोहराकारो वल्लभतां गतः। विस्तृत-कीर्तिततीनां जगतीपतीनामपि वर्यं वाहनं द्विदन्त एव निर्यमितः च देवादेववन्दनीयायाः कमलायाः सेवकवृन्दमध्येऽपिस गणितः। उच्चैःश्रवोऽभिधो हयस्त्वरितगतिः प्राशस्त्येनाङ्गीकृतो वाहनत्वेन भगवता पुरुहूतेन नाकपतिना विजेतुं संग्राममग्रामं रक्षितुं च स्वं स्वपक्ष्यांश्च। विहितमतयो नृपतयोऽपि प्रशंसन्तीद यानमेतद्युक्तं यानं च रथम्। भगवतः सहस्र-मरीचिमालिनः सर्वोत्कृष्टप्रकाशशालिनोऽपि स्यन्दनेऽश्वा एवोपयुज्यंते। यद्योगात्स समस्तं भुवन पारयति अतिक्रमितुम्। वृषभोऽपि वाहनं प्रभोःत्रिलोक्याः सक्षणरक्षणे परमकारुण्य-मुपेतस्य मूर्तिमन्मङ्गलमूलस्य सुरासुरशिरः समभ्यर्चितपद सरोरुहरजोवृन्दस्यैंहलौकिकपारलौकिकपरमप्रमोदस्यवितरणे स्वसात्वतां सातिशयतत्परस्यानुग्रहोदधेरधिदेवस्य महेशस्येति सुप्रथिततरम्। इति तल्लजे निगदिते वहनत्रयेऽधिरोहण-मालोकितं स्वप्ने किन्न भव्यं भावयेदीप्सितम्। हरितपत्रत-तिभिः विचित्राकृतीनां सरसतरुपंक्तीनां वा धरारुहाणां पृथक् पृथक् भूत्वा स्थितिविलसितानां दर्शनं शुभावहविधि विधायकम्। फलकुसुमसमृद्धिसमेतानां तेषां तदपि तथैव ज्ञेयम्। तेषां हरिद्वर्णरसत्रत्वेन मङ्गल्यत्वाच्छोभाधाय-कत्वाच्च पर्याप्तपर्णवत्वेन सम्पत्तिमत्वात्। फलानां सुमनसान्तु समृद्धिरूपतास्वरूपत एव सुज्ञा सुज्ञानां वा वैष्ट्येन श्वेत-वर्णानान्तेषामीक्षणं परममङ्गलास्पदम्। तेषां शिवात्मकत्वात् शुभेषु देवार्चनप्रभृतिषु कार्येषु विवाहादिमाङ्गलिकेषु

चोपयुक्तियुक्तत्वात् । श्रुतिस्मृतिग्रध्यायिनां तद्विहितानुष्ठान-सम्पादिनां सुचरितावलिशालिनां द्विजन्मनामपि दर्शनम् तथै-वास्ति मंगल्यम् नाभिप्रदेशे तृणोद्भूतिः द्रुमोद्भूतिश्चासमं सौभाग्यं ख्यापयति । अजोऽपि नाभिजन्माऽखिलभुवनकर्त्ता-ऽस्तीति तत्संबंधेनोक्तमिदं कल्प्यते । बहुबाहुशालिता स्वस्ये-तरस्य वा दृष्टिपथमिता बहुविषयशोवत्वं बाहुबलजन्यविजय-कर्तृत्वं करिष्यमाणे कर्मणि फलवत्वं च द्योतयति । भगवतो रामस्य दशाननकमलाविलासविरामस्यापि प्रलम्बभुजवत्व-मस्तितत्संसर्गेण प्रागुक्तं फलं शुभात्मकस्य स्वप्नस्यदर्शितं यत् तत्तु अनुमानकलितं यथाकथंचिदनुमेयम् यथार्थहेतुपुरःसरम् । बहुशिरोधारित्वम् वा बहुशिरोवत्वं दृष्टं दर्शकस्याखण्डित-मायुष्यं चान्तेवासिनो निगमागमाभिगममभिमतं भविष्यंतं भावयति । तथाहि शिरोह्युत्तमाङ्गं निगद्यते येन विना न जीवनन्तदेवोत्तमाङ्गं ध्रुवम् । मस्तकव्यतिरक्ते कस्मिंश्चिद-प्यवयवेऽवयविनो देहस्य कृत्ते सति प्राणी प्राणितुं पारयति परं मूर्धनिच्छिन्ने तु न कथमप्युपायसहस्रैरपि जीविताशा जीवधारणं च धर्तुं सम्भाव्यते । किञ्च नद्यां पुष्करिण्यां ह्रदे कस्मिन्नपि वा जलाशये तरितुकामैराप्लवकाले सकामं सोच्छ्वासमुत्तमाङ्गं वारिणा उपरि स्थाप्यते न तु वार्मध्ये । एकदा समभूत्कलहोऽन्योन्यमवयवानान्निखिलानामङ्गिनः तरणकाले यद् हस्तपादेनोदितमस्माभिरेवेदृशे काले श्रमो विधीयतेऽन्तः सलिलं गत्वेति न सुशकमेतद् विधातुमस्माभिः साहाय्यमन्तरेण शिरसो जलान्तर्गतस्य । बहुधा निषिद्धेऽपि शिरसा तथा तत्कर्तुं परन्नांगीकृतमभ्यर्थनन्तदीयं पादादिभिः अन्ततोगत्वा मस्तकेऽपि तरणीये पानीये निमग्ने तेन समं सकलान्यङ्गानि तानि जीवनान्तः प्रविष्टानि ययुरन्तं प्रधानं रक्षिणं सहायं मूर्धानमुपरिस्थायिनं विना । अपि च मदकारिणां

बुद्धिविलोपनदायिनां मादकद्रव्यानां सेवने कृते मस्तकं मदध्वान्तध्वस्तमज्ञानोपहतं कार्याकार्यविधानज्ञानासमर्थमकिञ्चित्करं भवति। तेन सार्धमेव समग्राण्यप्यङ्गानिनकिञ्चित्कराणि तिष्ठंति इति तस्य प्राधान्यं सुस्थितमेव विद्यते। प्रजासृजाऽपि प्रापि चत्वारि शिरांसि तेभ्यश्चतुर्णामपि वेदानां पारदृश्वना तेनाभावि, प्रौढाप्त सकलविश्ववोधभावितान्तःकरणेन। तस्मादुक्तं बहुशिरोधारित्वं वहुशिरोवत्त्वंवा दृष्टं समग्रविद्याप्तिहेतुकं कुतो न सम्भावनीयम्। पलितोद्भूतिरपि देहे दर्शनं याता परमायुर्भविष्यतीति ज्ञापयति। पलितं रोगविशेषः यः प्रायेण वार्धक एव दृश्यते अत एतद्दर्शनादायुर्विशेषावाप्तिः सुकल्पा। श्वेतानां मालानां वा माल्यानां धारणमपि मंगल्यं मंगलाकृतित्वात् भद्रेषु कृत्येषु तद्वर्णस्य सुग्रहत्वाद् मंगलास्पदत्वं तादृशानां तेषां सुवचत्वम्। अतिशयशुक्लानामम्बराणामपि धारणं तथैव। धवलाम्बरधारित्व भगवतः परमपुरुषस्य माधवस्य मंगलायतनस्य विश्रुतमेवार्चनकाले ध्यानयोग्यम्। विधुमण्डलस्य च सहस्रकरमालिनोविम्वस्य ग्रहणं हस्तेन वा भक्षणं सुनिश्चितोन्नतेः हेतुः विद्याप्राप्ति द्वारा, धनागमपुरः वा सुस्थितकीर्तिपुरस्सरम्। निशायान्निशानाथस्य दिवा दिवानाथस्यामानासमानभासनाश्रयस्य दर्शनस्य सर्वोत्कर्षेण वर्तमानत्वात्। तयोरसमः प्रकाशः जगद्रक्षावासः परममाङ्गलिकः। तयोर्भक्षणमपि च मुखे गमनमतिश्रेयस्करं; सुदुर्लभस्य च प्रार्थ्यमानस्य प्रियस्य पदार्थस्य प्रदमस्ति। तथैव सरोरुहस्य वहुतरं कमनीयस्यापि भक्षणं ज्ञेयम् तत्फलम्। दर्शितञ्चैतत्कादम्बर्यां बाणभट्टनिर्मितायाम्—सकलावनिपालमुकुटमणिघृष्यमाणचरणयुगलस्य सम्राजस्तारापीडस्य वार्धकेऽपि नापत्यमुखमवलोकयतः प्रथिततरसौभाग्यशालिनी, विलासिनी भूलोकसुन्दरीसौन्दर्यशोभावि-

मानिनी, महिषी निरपत्यताजातां सुदृढां मनोव्यथां भजमाना तामसहमाना च शास्त्रोक्तविधानकृतधीः सविधिसमुपासितवती कालकालं कण्ठेकालं महाकालमेकतमं द्वादशसु ज्योतिर्लिंगेषु भूतिभूषितांगरागं रागानाविद्धचेतसं चैतन्यमूर्तिम्मूर्तिमदपार-कृपानुगतं त्रिलोकीसृष्टिस्थितिसंहृतिविधाननिदानमुमेश्वरं गिरीश्वरम्। ततः प्राप्यापगतसकलसादं प्रसादं समालोकित-वती नितान्तशुभावहं सुस्वप्नम् मुखे शशिप्रवेशरूपम् सुप्तासती कस्यांचित् त्रियामायाम्। दधार च गर्भं गर्भितमनोरथं चिरप्रार्थितम्, लेभे च सूनुं यशोधवलीकृतदिग्विभाग भागं लोकपालानाम्, समस्तसामन्तचक्रवन्दनीयाखण्डशासनमनि-वारितारातितापप्रतापम्। यदीयमाह्वयमाहूतं चन्द्रापीडेति, वभूव चन्द्रभक्षणरूपस्वप्नजन्यत्वात्तस्य। तारापीडावनिपालस्य प्रधानामात्यस्य शुकनासनामधेयेनालंकृतस्य धर्मपत्न्यपि तथैव स्वप्नमम्बुरुहभक्षणस्वरूपं दृष्ट्वा वभार गर्भन्ततः सापि-लब्धवती सुतं प्राणनिर्विशेषम्, यदीयमभिधानं वैशम्पायनेति ख्यातमासीत्। इति प्रथममुक्तं फलमनवद्यं तादृक् स्वप्नानाम्। तारकिते नभसि तरलतराणामभिरमितनयनताराणां ताराणां कमनीयकान्तिभाजिनीनां हस्तेनादा नमपि तथैव विशुद्धरमणीयफलकं बोध्यम्। शरीरजमलदूरीकरणप्रथमं स्नानं वा वारिपरिमार्जनमपि अपकीर्तिकलङ्कपङ्कस्य, तत्तुलनामुपगतस्यावोधध्वान्तस्य, तत्साहश्यमितस्य दुःखस्य च रोगस्य निवर्तनाख्यायकम्। कस्यचिन्मेदिनीपतेः केतुनोच्छ्रितेन समाश्लेषः विशेषतस्तु, व्याप्तयशसो विडौजसः त्रिदशक्लान्तिमुषा मृदुलमनोहर मधरकान्तिजुषा मण्डनीयाखण्डनीयसौराज्यावगमकेन ध्वजेनालिंगनं प्राक्फलकमतिशयमनवद्यम् मन्तव्यम्। प्राङ्निगदितयोर्ध्वजयोरन्यतरस्योच्छ्रायक्रिया स्वकृता, विक्रियां

सर्वविधामनुन्नतिं च दुर्नियतिनियमितां निवारयतितरां सुतराम् अन्यदत्ताया भूमेर्ग्रहणं वा स्वकीयद्रव्यविनिमयद्वारा क्रयणं समृद्धिः सम्पत्तिश्चागामिनीत्यवबोधकम्। मेदिनीनिमित्ता-मुपादायैव तद्द्वयोद्भवदर्शनात् विशेषाधाराया अम्बुधाराया अविच्छेदेन प्रवर्तमानाया आदानम् निजभुजद्वाराऽविकलस्या-युष्यस्य गमकम्। रोगाक्रान्तिदशायां दृष्टे तु गदमुक्तिरवश्यं भाविनीत्यवगम्यते, तद्धाराऽऽयुश्चोभयमपि निरवच्छेदेन प्रवर्तते। साम्यमेतत्सुस्थितम्। अहितविधानपरायणान्तः करणानामपगतसुखोपकरणानां रिपूणांन्यक्क्रिया वा विक्रिया, दर्शकप्रिया दृष्टा सती प्रियं विजयमुन्नतिं च सूचयति साम्यात् तदर्थशक्तिस्वाभाव्यात् च। वादजल्पवितंडानां तिसृणाँ कथानां न्यायदर्शनेस्पष्टीकृतस्वरूपाणां निर्णीयमानार्थसुविहित-पद्धतीनाम् मध्यएकतमेन पथा प्रवर्तमाने निर्णेष्यमाणार्थे विगतनिरर्थकार्थे शास्त्रार्थे चाननुस्यूताकृतेऽमूर्तद्विषद्भूते द्यूते, च सत्वरविनाशितनगरग्रामनरनारीग्रामे, निकामक्षपितधनशान्तिसुखप्रकाण्डे संग्रामे वा परमप्रचयं सुजयं दृष्ट्वा नितरां प्राप्तकामः यथाकामं भवति जनः साम्यात्, तादृशशक्तिस्वाभाव्यात् च। आर्द्रमांसस्यात्त-सारस्य मांसाशितानामशने सुस्वादमुपगतस्याशनम् स्वास्थ्य-प्रदत्वेन श्रेयस्करम् आयुर्वेदानुसारेण—सद्यो मांसं नवान्नं च वालास्त्री क्षीरभोजनम् अशीतेनाम्भसा स्नानं सद्यः प्राण-कराणिषट्। इति स्मृतेः तस्य तत् फलमनुमीयतेतत्साहश्या-ज्जाग्रदवस्थायाम्। प्रतिकूलाः तद्विरुद्धपरिणामाः तु पदार्थाः—शुष्कं मांसं स्त्रियो वृद्धाः वालार्कस्तरुणं दधि। प्रभाते मैथुनं निद्रासद्यः प्राणहराणिषट् इति। वर्धितमेधसः पयसः सुवर्णत्वाद्यशसातुलनामुपगतस्य स्वप्ने भक्षणम् वा पानम् सुरम्यायतिकीर्तिततिसम्पादकं वा यशोहेतुकस्य कस्य-

चिद् वरीयसो वस्तुनो लाभागमननिमित्तम्। पयोविकार-
स्यापि धवलस्य बृहत्स्वादस्य खाद्यस्यादनमपि तथैव शुभम्।
यशसो धवलत्ववर्णनं कविकुलसंप्रदायसिद्धम्। अतएत-
तदनुमानमपि मृषाशंकाकलङ्कापेतम्। पीतं हि पयोदिली-
पेनाखण्डप्रताप—तापितरिपुकुलेन रघुकुलमूलारोपणपरायणेन
स्वगुरोः वसिष्टस्य परमविशिष्ट-तापसपुरस्सरस्य सर्ववन्द-
नीयामप्रतिहतामभ्यनुज्ञामुरीकृत्यानन्दमूलिनीं नन्दिनीं धेनुं
भगवतीं परमसौभाग्यास्पददर्शनामुत्कटभक्तिनितान्तपूतान्तः
करणेन सेवमानेन संतानस्य वंशसंतानसाधनसम्पादकस्य
निमित्तम्। निवारितविषादे तस्याः प्रसादे कानने प्राप्ते
तस्या एवाज्ञया शिरोधारितया, महाकविः कालिदासः कविता-
कामिनीलावण्यविलासप्रकाशः वर्णितवांस्तत्पयःपानं
रघुवंशे स्वं संचितं यश इव पपौ दिलीपः इति तदातस्याः
क्षीरमतिशयमधुरमिति प्रकृतेऽपि सरणिमेतामधिकृत्य
तत्पानं तथैव वर्णितमिदं सम्यगुक्तमिति मंतव्यम्। रुधिरस्य
पानं दृष्टं सद् गदार्तस्यार्तिमोचनहेतुकम्। हि
रोगिणि रुधिराल्पता जायते इति तु सर्वैरङ्गीकार्यम्।
तद्दर्शनाद् रुधिरवृद्धिः सुतरामनुमातुं शक्यते। रक्तवर्धन-
पूर्वकं स्वास्थ्यमपि भावि कल्पितुमर्हम्। रुधिरेण स्नान-
मपिदर्शनविषयं गतं बृहदरिनिकरे समरे प्रवर्तमाने सौभाग्य-
मभाज्यं ज्ञापयति यत् रिपुकदम्बं खण्डशः कृत्वा रुधिर-
जलधारायां प्रसृतायां सरिद्रूपायां कृतस्नानः अम्लान-
सावधानमानसः विजयश्रियं लभते दर्शकः। मांद्योपेतेन
शयानेन योगादलिप्तकरणविषयभोगरोगजखेदखिन्नायां मलीमस-
तामुपगतायां मनोदशायां मृतप्रायायां दृष्टं तु तत् आतुर-
स्यार्तिनिवृत्तिं च सुस्वास्थ्यावाप्तिपूर्वकं चिरजीवित्वमाश-
सति। निर्मलमविकल रुधिरमेव प्रायशः स्वस्थशरीर-

स्थितिमूलमिति सर्वेषां सिद्धान्तसम्मतम्। अतएव वार्धके देहे यथाक्रमं क्षीणतां प्रयाते शनैः शनैर्मृतिं विधिविहित-नियमतति प्राणीसमवैति। विगतधुरां सुरामनवद्यं मद्यं च मधुरं मङ्गलाकारं क्षीरं पीत्वा सुप्तौ जनः विगतविकारं शरीरं नयमानः अविरतिं प्रमोदसन्ततिं भजमानः कृत्स्नं वितृष्णां यशश्चाश्नुवानो जायत इति कल्प्यते यतः आद्यं द्वयं सुरैरपि गृहीतममन्दानन्दकन्दमूलं ह्येतदितिकृत्वा। ते हि सुखनिवासविलासे प्रसितस्वान्ताः सन्ति। अन्तिमं पयोरूपं तृतीयं तु अग्निहोत्रसाधनं देवप्रसादनम्, नैर्बल्या-प्रमोद-विशातनम्, मङ्गलमूलयशोवर्णं चोक्तफलं युक्तियुक्तं प्रतिभाति। भूमावस्त्रकृतमवचेष्टनात्मकं स्वतः विचलनं दृष्टं सत् शत्रु संकटे सन्निहिते विदितरिपुभीते दैवपराङ्-मुखे संग्रामे बृहद्रिपुग्रामे सुप्रचयं विजयं ध्वनति। एतद् हि अनुकूलदैवकृतमिति मन्तव्यम्। श्रूयते दृश्यते च तत्तथा शास्त्रेषु तदितराचार्यकविनिर्मितेषु ग्रंथेषु च। मृच्छकटिके दृश्यकाव्ये चारुदत्त हन्तुकामस्य लवधकस्य हस्ताद् दृढमुष्टिनिपीडितो ऽपिखड्गः भुविपतित इति प्रोक्तम्। नाशक्नोच्च तदीयप्राणवियोगं भावयितुं सोऽसिः। इत्थं प्रकृतेऽपि स्वतः संजातमस्त्रेषु भूमिगतेषु समरसाधनेषु विचलनं तेषां स्वकार्यकारित्वमुत्कटंसाफल्यं सपत्नवैफल्यं च प्रकटयति। अपगतमलमवदातं देवसदनं गगनमालोकितमा-गामिनः प्रतिकूलस्य दुरितस्य निवर्तनपूर्वकं शुभावहविधिमूलं मङ्गलमाकलयतितराम्, सुदैवदर्शितत्वात्तस्य। आकाशवर्णंतु स्वाभाविकं मलिनं वर्ण्यते। कविसम्प्रदायसिद्ध हि तत्। इह तु शुद्धस्य तस्यदर्शनम्। दुग्धदात्रीणां महिषीणां दोहन-प्रयोजनानां गवां प्रसूतसिंहानां सिंहीनां दोह्यानामश्वानां च मोहितगजघटानां गजीनाम् निश्रितस्तन्यानां मुखेनस्त-

न्यपानं वा दोहनं महत्प्रशस्तं भवति। स्वप्ने विगतनीरस्य क्षीरस्य पानं प्रौढहर्षस्यागामिनः प्रतिपादकमिति प्रागुक्तम्। इह तु तिसृणामन्त्यानां पयः पानं विशेषतः बहुपराक्रमशलिनीनां राज्ञः सकासादसाधारणोन्नतिं महाभयानुपस्थितिं च निगदति। देवेभ्यो भूदेवेभ्यो गुरुभ्यं आचार्येभ्यश्च सकाशात् तिरोहितमदस्यावधूतप्रमादस्य प्रसादस्य रूपेण-लब्धस्य कुसुमफलस्वरूपस्येतरस्य वा कस्यचिद् भोज्यस्य वस्तुनो दर्शनं वा प्राक् प्रतिपादितानामेषां देवादीनां प्रसन्नता, तिरस्कृतबाह्याभ्यन्तरीयमलिनता दृष्टा सती हृद्गतं सर्वविधं प्रियं प्रददाति। एतच्छक्तेः स्वभावस्य लोके जागृतौ स्फुटं दर्शनात्। अत एतेषामन्यतमस्य पूर्णानुकूल्य-मेव विचित्रचर्चमद्वितीयं फलं फलति अभिषेकोऽनपेक्षिता-सद्विवेकः प्रकति परिपूतानुत्तमपरिपाकः गवां शृङ्गच्युतेन च चन्द्रमरीचिपतितेन वारिणा कृतः सुप्तौविबुधवृन्देनापि वन्दनीयमसाधारण शुभायतिततितम् राज्यावाप्तिस्वरूपं वोन्नततरपदलब्धिरूपं शुभं दैवमाकलयति। यतः नृपाभिषेकः अम्भसा क्रियते। गोशृंगपतितेन तुतेन, तदीयशृंगेस्थितिमती भूमिः गवा तादृशसलिलेन प्रियनिर्मलाभिषेकद्वारा स्वयं दीयते तस्मा इति कल्प्यते। विधुरोषधीनाँ पतिरुच्यते तत्रौष-धिस्तु दर्भोऽपि तद् द्वाराऽभिषेकः राज्याप्तिकाले कालविद्भि-र्मान्यैः प्रकाण्डपण्डितैः सम्पाद्यतेऽतः कल्प्यते औषधिपति-रात्मनैव तं सम्पादयति तस्य। किञ्चायं द्विजपतिरपि कथ्यतेऽभिषेकं च द्विजन्मान एव विदधति। राज्याभिषेकस्तु दृष्टिमितः स्वभावादेव पदौन्नत्यमहत्वसूचकः। स्वस्य शिरसः छेदनं रुधिरक्लेदनमकृतदुःखप्रकटनं तु अपमृत्युमकालमृत्युं वा निवार्याधिकं तत्कालाद्वाऽविकलमायुष्यं ज्ञापयति। अन्य-स्यैव कस्यचिन्मृतिस्तेन श्रवणीया भवति। तत्तथा दृष्ट्वा

स्वकीयविनिवृत्तिः ततः सुस्पष्टं प्रतीयते । दर्शनं तु तस्य स्वसंबंधित्वेन तादृशचिंतनात् । महतः बृहच्छुभफलस्य शुभादृष्टस्याधिक्यात् तदितरस्य च तस्य स्तोकत्वात् स्वप्न एव तादृशापमृतेरनुभवनं फलत्वेन कल्पनीयम् कृत्रिमरूपेण, न तु स्वरूपतस्तदिति निःसंशयम् अस्ति । केचिद् वदन्ति नाकालमृत्युर्भवति तथाहि नाकाले म्रियते कश्चित् (जन्तुः) प्राप्तकालो न जीवति । इति स्मृतावुक्तत्वात् । तदपरे न क्षमंते आयुर्वेद शास्त्रस्य सर्वथोच्छेदः स्यात् । नियतिमिते त्वायुषिमृतिर्यदि निश्चिताऽवश्यंभावित्वेन स्यात्कथं कृत्वाऽऽयुर्वेदशास्त्रं प्रवर्तेत । किञ्च शास्त्रेषूपनिषदादिषु तन्निवारणोपायाः सकाया निरपाया बृहच्छायाः साधुभिः कथिताः सूपपादिताश्चोति तन्नैष्फल्यं प्रसज्येत । युक्तियुक्तोऽप्यसौ पंथाः प्रतीयते सत्यप्यत्रुटितेऽच्छिद्रे तैलाधारपात्रे सत्यपि च तैले सत्यामपि वर्तिका यामुचितायां प्रबलवातवेगपराहतः सन न दीपः प्रज्वलितुं प्रकाशयितुं च यास्यति केनचित्तद् बाधकेन जन्तुनापि समवरुद्ध प्रकाशस्थानीयवर्तिकामुखः निर्दीप्तिर्भवन् निर्दीपतामापद्यते तदुपशमितः । अपि च शकटे विंशतिखारीपरिमितस्यद्रव्यस्य वहन कर्त्तृत्वशक्तिमति स्थिते यदि तेन चत्वारिंशत् खारी परिमाण परिमितस्य वस्तुनः परिवहनं कार्येतासंशयं तद्वाहनं भग्नं भवेत् । एवं प्रकृतेऽप्यनुसंधेयम् । प्रबलस्याधर्मस्य बाधकस्योपस्थितौ वाऽनुपयुक्तस्य मिथ्याहारविहारस्य सत्तायां प्रागुदितं सम्यग्वक्तुं शक्यम् । इत्थं मरणमपि दृष्टमुक्तफलं वेद्यम् । अन्येन दत्तस्य वा स्वतो लब्धस्य वह्नेः लब्धिरूपः प्रभाप्रदः स्वप्नः चिराय स्थीयमान भासमान कार्तस्वररजतादिरूपद्रविणस्यानायासेन लाभव्यंजकः । क्षीरनिधितनयाया भूषितविधिवामभागाया भारत्याश्चाखण्ड प्रकाशमण्डलमण्डितत्वात् । उक्त धातुद्वयरूपत्वात् च । यस्तु

संवेशस्थाने निषदनसदने वा दाहं वह्निना पश्यति वा तदितरेषु पर्वतेषु काननेषु दाहं स्वयं प्रकटितमन्यविहितंवाऽवलोकते तदपि तत्फलकं ज्ञेयम्। प्रागुपपादनरीत्याऽनाशः प्रकाश एव मुख्यं कारणं स्वरूपं च तस्य निर्धार्यताम्। असाधारणाना राज्यशासने प्रधानकारणतामुपगतानां छत्रादीनां राजलिङ्गानां लाभः परमभाग्योदयहेतुः। येन राज्यं तत्सदृशमन्यद् वा पदमुच्चं लब्धुं व्यज्यते। लिंगेन निर्दुष्टेन लिङ्गिनः साध्य-स्यानुमानं न्यायशास्त्रे प्रसिद्धमेवं प्रकृतेऽपि पुण्डरीकायितं छत्रं चन्द्रप्रभं सुषमायुतं च चामरद्वयं नृपलिङ्गं लिंगिनस्त-स्यानुमापकम्। तन्त्रीवाद्यस्य वादनमागामिनो निर्विघ्नस्य श्रेयस आल्हादकारणस्याख्यापकम्। वल्लक्योहि प्रसिद्धाः चतस्रः सति। तथाहि विश्वावसोस्तु बृहती तुम्बुरोस्तु कला-वती। महतीनारदस्यस्यात्सरस्वत्यास्तुकच्छपीति वैजयन्ती कोषानुसारात्तथा तथा तत्र तत्र दर्शनाद् वा ज्ञेयम्। विश्वावसोः देवस्य तन्त्री बृहत्याख्या, तुम्बुरोर्गन्धर्वस्य सा कलावती नामिका नारदस्य देवर्षेः महत्यभिधाना सरस्वत्या विद्याधि-ष्ठात्री देवतायाः तु सा कच्छपी नामधेया। स्वप्रियवाद्यस्य वादनं च हर्षावस्थायां स्वकृतसुकृताधिगतायामे यामे वेष्यते चाभिनंद्यतेऽतःकर्तव्यसेवानां देवानां च तिरस्कृतदुष्कृतपुञ्जस्य मुनिजनस्यावसन्नसादः प्रसादोऽनुमीयतेऽत एतद्दर्शनस्य प्रचुर-हर्षापादनं फलं सम्यगस्ति। अप्रतिहताज्ञस्य राज्ञः पराक्रमति-रस्कृतप्रवलारिजन समूहस्य च सर्वतो भावेन भावेन क्षीराब्धि तनया सेवा प्रसितस्य कुंजरस्य च स्वत्वरितगतितिरोहिते-तरसत्वरगमनस्य हयस्य च दितिजादितिजमनुजगणादरणीय स्याखिल धात्वग्रगणनीयस्य प्रशस्तकीर्तिपदस्य प्रकृष्टरमणीयता बहुमूल्यतारंजिताखिलमानसस्याष्टापदस्य च निखिलचतुष्पा-द्वृषभस्य प्रभुतममहादेवादृतप्रियवाहनस्य वृषभस्य, पूजनीय-

दर्शनस्पर्शनस्य गोश्च स्वप्ने वा स्वप्नान्तिमे दर्शनम् संपत्सुखै-
धनम् तत्साधनवर्धनम् कुटुम्ववृद्धिसाधनं चास्ति। एतेषां
तत्र तत्र प्राकृतिकहेतुत्वस्य विस्पष्टदर्शनानुभवविषयत्वात्।
सुप्तौ कृतं रोदनं हर्षवर्धने वा हर्षसाधनवर्धने पर्यवस्यति
तथैवानुभवात्। किञ्च स्तोकतमं कल्मषमल्पतमासुखभोगाय
भवति। अत्रावस्थायां (स्वप्नावस्थायाम्) विहिते तादृशासुच-
रितजनिते दुःखोद्भूतिस्वरूपे रोदने तथ्यमस्ति। न तु जाग्र-
दवस्थायामिन्द्रियमनःसंयोगावस्थास्थितिमत्यामसुकृतफलस्य
दिग्दर्शनतुल्यस्यानुभवोऽवशिष्टो भवति। सुप्तावनुभूतिं
विधाय जागृतौ तस्य सर्वथाऽनावश्यकत्वात् घृतलेपोऽपगता-
वलेपः कृतः आयूंषि वर्धयति। आयुर्घृतमित्यादि दर्शनाद-
नुभवाच्चसर्पिष आयुर्वधकत्वमस्ति। तल्लेपेनानुमीयते यत्
तादृशं शरीरमपगतविकारं सत् अपमृत्युनाऽऽकस्मिकरोगेण
चागन्तुं सम्भावनान्वितेन विहीनं भवति इति अवगम्यते।
निवारितजनिकृतबहुतापः विष्टानुलेपः स्वप्नेकृतः दुःखश-
तानि निवारयति। रोगागमनस्याकालिकस्य च निवारणं
ध्वनितं भवति। यतः जन्मिनो जन्मकाले विशाले जन्मवान्
स्वदेहेन लिप्तमलो भवति अथैतेन स्वप्नेनानुमितं जायते
यत् जन्मप्रभवाणि सकलानि दुःखानि गमयित्वा सुखशतान्य-
नुभविष्यतीति। अगम्यायां स्त्रियां शूद्रजातौ वाऽस्पृश्यायां
जातौ गृहीतं जननं वा गमनं सुप्तौ प्रशस्तं वर्तते। तत्तद्धे-
तुकाऽसम्पद्निवारणपुरःसरमशुभनिमित्तापसरणपूर्वकं च
शुभगार्यति निगदति। यथा कश्चिद् नीचकुलगतां प्रचुरां
श्रियं वा हीनकर्मनिरतस्य महीभुजः प्राज्यं राज्यं लभते।
स्त्री च श्रिया तुलिता अत एषा कल्पना सयुक्तिका
प्रतीयते। अगम्यां स्वप्ने गत्वा व्यभिचारविकर्म सम्पदादन-
निमित्तं कृतं दुष्कृतमपि क्षपारूपं क्षपयितुं क्षमते जनः।

पुनर्जागृतौ तादृशं स्वल्पं कर्म नोज्जीवति स्वफलमनुभावयितुं, स्वप्ने तस्य तादृक्षावलक्षफलोपभोगात्। एतत्प्रभृतयः ते तेऽन्येऽपि शुभाः शुभाभिधाः स्वप्ना अनुसंधेयास्तत्फलानि च तानि तानि ज्ञेयानि।

इत्थं प्रागुक्तदिशा स्वप्नस्य चतस्रो भिदाः सम्पद्यंते। तथैव स्पष्टीकृतं वर्धमानसूरि विरचिते स्वप्नप्रदीपे–

स्वप्न श्चतुर्विधः प्रोक्तो दैवः स्वानुभवप्रजः।
धातुप्रकोपजश्चैव चित्तोद्भूतश्चतुर्थकः ॥१॥
द्वावाद्यौ सफलावन्यौ निष्फलौ द्वौ दिवानिशम् ॥

इति सकलमनवद्यंमविचित्सम्। फलान्येतानि शुभाशुभ-स्वप्नानामुद्दिष्टानि अग्निपुराणे पुराणेन व्यासेन महर्षिणा, मयेह तान्यनुसृत्यैव प्रोक्तानि। अदृष्टमेव शुभाशुभस्वप्नानां तत्तद् वर्णनीयावर्णनीय-प्रियाप्रियफलानां दर्शने प्रधानकारण-तामुपयातीति सुधीभिर्विभावनीयम्। वातपित्तश्लेष्मणां न्यूनताधिकते ऽपि निदानमिह वोध्यं यथा प्रागुदितमितिशम्। अथेदानीम्-निखिलशास्त्रशिरोमणिभूत वेदान्तदर्शनसिद्धान्त-मनुगम्य प्रत्यक्षीकृताखिलजगद्वस्तुजात याथातथ्यानाम-द्वैतामन्दानन्दपरिभावितसकलवासनानाम्। यमिना-मग्रणीनां समस्तविश्वे नास्तिकवादध्वांतस्य निवारणे सहस्रभानुभानूनां आचार्यप्रवरवृन्दवन्दितमहामहिममहनीय-पदाब्जानां श्रीशंकराचार्यस्वमिनां मतमनुकूल्य च तदनुया-यिनां प्रौढावोधमुषां प्रखरप्रतिभाजुषां विदुषाम्मतितर्ति पुरस्कृत्य स्वप्न स्यावास्तविकत्वेन मिथ्यात्वं शुभाशुभसूचक-त्वं च तत्स्वरूप प्रदर्शनपुरस्सरं प्रदर्श्यते। जीवब्रह्माद्वैत-प्रतिपादने पीयूषविशेषाधारधारायाः प्रवर्षिणा महर्षिणा भगवता व्यासेन वेदान्तदर्शनीय तृतीयाध्यायस्य द्वितीयपादे प्रथमं सूत्रं निर्मितम्–"सन्ध्येसृष्टिराह हि" एतदध्यायस्याति-

क्रान्ते प्रथमे पादे-जीवस्य संसारगतिप्रभेदः सप्रपञ्चं प्रपञ्चितः साम्प्रतन्तस्यैवावस्थाभेदो निरूप्यते। संसारगतौ निरूपितायान्ततो दृढीकृत वैराग्यस्य जनस्य तत्वमसीति महावाक्यार्थावगमाय तत् त्वमिति पदार्थौ शोधयितुमिमं पादमारिप्सुर्वर्तते महर्षिः। त्वमर्थस्य जाग्रदवस्था तु संसारस्थितिवर्णनेनैव वर्णिता ऽतः तस्य स्वयं ज्योतिष्ठसाधनाय स्वप्नावस्थां प्रतिपादयितु ं। पूर्वपक्षं स्थापयति साध्य इत्याद्यसूत्रेर्णर्षिः। तस्य स्वयं ज्योतिसृवं सुस्पस्टं वर्णयितुमादौ स्वप्नावस्थां व्यवस्थापयति। न तु सुषुप्तिम्। जाग्रदवस्थायामायामयत्वमुक्त ं सम्प्रति तदेव मायामयत्वं स्वप्नस्य प्रदर्श ंयितु ं तद् विषय वाक्यमुदाह्रियते। बृहदारण्यके ४-३-६ इति प्रकरणे प्रोक्तम्। इममामनन्ति "स यत्र प्रस्वमिति" इत्युपक्रमं विधाय न तत्र रथा न रथयोगा न पन्थानो भवंति। अथ रथान् रथयोगान् पथः सृजते" इत्यादि तत्रैव ४-३-१० इति प्रकरणे प्रोक्तम् अत्र स्वप्नमयीं सृष्टिमधिकृत्य रथादिसर्गकथनाद्रथाद्यभावकथनाच्च भवति संशयः—किं जागरित इव स्वप्नेऽपि सृष्टिः पारमार्थिकी अर्थात् अर्थक्रियासमर्था न तु सत्येति वाच्यम् तस्या अपि सृष्टेर्नास्तविकत्वायोगात्। आहोस्विन्मायामयीति प्रातीतिक सत्तामात्रोपेतेति। उच्यते त्वं पदार्थस्य जीवस्य तत्वमसीत्यत्रोपात्तस्य स्वप्नावस्था निरूपणीया तत एव निष्कृष्टिमितस्य स्वयं ज्योतिषः शुद्धस्वरूपतया वाक्यार्थान्वयवत्वेन तत्कारणत्वमस्तीति तत्प्रतिपादनात् प्रकृतसङ्गतिः। पूर्वपक्षे स्वप्नस्य यथार्थता दृश्यते ततो निष्कर्षाभावात् अशुद्धस्या स्वयं ज्योतिषो वाक्यार्थान्वयोऽनुपपन्नः। सिद्धान्तपक्षे तस्यायथार्थत्वात् ततो निष्कृष्टस्य स्वयंज्योतिसृवात्तत्संवधेनतद्धीहेतुतेत्यभिप्रेत्य पूर्वपक्षः स्थाप्यते—संध्ये सृष्टि-

रिति संध्यमिति स्वप्नस्थानमुच्यते, वेदे तादृशशब्दप्रयोग-
दर्शनात्। "संध्यं तृतीयं स्वप्नस्थानम्' इति बृहदारण्यके
४-३-६ इति स्थले प्रतिपादनात्। द्वयोर्लोकस्थानयोरर्था-
देहलौकिके पारलौकिके च यदिन्द्रियसंबधिरूपादिज्ञानं तस्या-
सत्वादनुत्पत्तेश्च स्वप्नस्थानं तयोः संध्यं निगद्यतेऽथवा
प्रबोध संप्रसादस्थानयोरथत् स्थूलदर्शनस्याभावात् वासनाम-
यज्ञानस्य च तत्र सत्वात् संधौ भवतीति संध्यमिति स्वप्न-
स्थानन्निरुच्यते। तत्र संध्ये स्थाने सृष्टि तथ्यरूपैव भवितु-
मर्हा कस्मादिति चेदुच्यते। आह हि—यस्मात् प्रमाणभूता
श्रुतिरेवमाह 'अथरथान् रथयोगान् पथः सृजते' इति बृ०
४-३-१० इति श्रुतिर्बाह्यरथाद्यभावेऽपि प्रोक्ता सती सा
सृष्टिः तथ्येत्यनुमापयति। किंच न केवलं सृष्टिश्रुत्यैव
स्वप्नसृष्टेः सत्यत्वंशक्यते किन्तु सकर्तृकत्वादपि। अतो
जागरितसृष्टिवदर्थक्रिया समर्थत्वं सत्यत्वंन्तस्या
एष्टव्यम्। स हि कर्तृत्वस्य चोपसंहारस्य दर्शनात्।
अपि च विमताः स्वप्नरथादयः सत्याः निर्मित-
त्वाजजाग्रन्निर्मितरथादिवदित्यभिप्रेत्य ऋषिः पुनराशङ्कते
तत्सृष्टेः सत्यत्वं द्वितीयेन 'सूत्रेण '·निर्मातारं चैके पुत्रादय-
श्च" अनेन अन्ये शाखाध्यायिनोऽस्मिन्नेव संध्ये स्थाने
कामानां निर्मातारत्मानमामनन्ति ते च कामाः पुत्रादयः
इति सूत्रार्थः। काम्यंते ऽभिप्रेयंते इति कामाः पुत्रादयः
काम्यमानत्वादेव। सुप्तौ करणेषु निर्व्यापारेष्वपि सत्सु
पुत्रादयो हि काम्यंते निर्मीयंते, तदुक्तम्। "य एष सुप्तेषु
जागर्ति कामं काम पुरुषोनिर्मिमाणः कठोपनिषदि ५-८
प्रकरणे, यः स्वपिति स एव जागर्ति तथातथा कामानां निर्माता
अतः कल्प्यते जागरित सृष्टेरिव सुप्तिसृष्टेरपि सत्यत्वमिति।
ननु योगाद्रूढिर्बलीयसीति न्यायेन प्रकृते काम शब्द इच्छाविशेष

परो न तु व्युत्पत्त्या पुत्राद्यर्थप्रतिपादकः यथा कर्मणिकुशलः इत्यत्र कुशलपदं निपुणार्थवाचकन्न तु कुशादानकर्तृत्वार्थ परिमिति चेन्न प्रकरणविरोधान्नात्ररूढिशक्तिराश्रयितव्या तथाहि "शतायुषः पुत्रपौत्रान् वृणीष्व" कठ० १–२३ इति प्रकरण प्रघट्टकान्ते "कामानां त्वा कामभाजं करोमि" इत्यादि-स्थलेषु कामशब्दस्य तत्र तत्र पुत्रादिषु प्रयुक्तत्वात्। किञ्च स्वप्नसृष्टिः सत्यैव परकर्तृकत्वात् संप्रतिपन्नवत् प्राज्ञ एव कर्ता इत्यर्थः अतोऽत्र निर्माता प्राज्ञ एव प्रतीयते प्रकरणात् वाक्यशेषाच्च तथाहि प्रकरणं ह्येतत्प्राज्ञस्य "अन्यत्र धर्मादन्यत्राधर्मात्" कठ० २–१४ प्रकरणे धर्मादधर्मादित्युभयतोऽप्यन्यत्रेति प्रोक्तत्वात्। प्राज्ञ एव कर्तेति भावः। प्राज्ञ शब्दो ब्रह्मपर्यायः आत्मपर्यायो वास्ति तद् विषये वाक्यशेषोऽपि दृश्यते "तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते तस्मिंल्लोकाः श्रिताः सर्वे तदुनात्येति कश्चन" कठ० ५–८ इतिसत्त्वात्। सृष्टेरुभयविधाया अपि प्राज्ञकर्तृकत्व स्पष्टम्। सर्वस्यत्रोक्तस्य वस्तु-जातस्य सकललोकरूपस्य ब्रह्मरूपत्वात् ब्रह्माश्रितत्वात् तद्भिन्नस्य कस्यचिदप्यर्थस्याभावात्। यद्यपि कश्चित् सृष्टे-र्जीवकर्तृकत्वं वदति तथापि जीवस्य प्राज्ञेनाभेदात् ब्रह्मणस्तद्-भावात्प्राज्ञकर्तृकत्वं सृष्टे रक्षतम्। इत्थ प्राज्ञकर्तृका सृष्टिः सत्यरूपा सिध्यति। यथाच जागरणविषया सातथ्या तथा स्वप्नविषयापि सा याथातथ्योपेता भवितुमर्हाऽस्ति। किञ्च सुप्तिजागृत्योः समानदेशता श्रूयतेऽतोऽपि स्वप्नसृष्टेः सत्यत्व-मायाति। अपि च स्वप्नजागरितधियोरेकार्थत्वं श्रुतिगदितं ततोऽपि तस्याः सत्यत्वन्निर्वाधं दृश्यते इत्युक्तद्वयेऽर्थेश्रुतिरुच्यते। "अथो खल्वाहुर्जागरितदेश एवास्यैष, इति यान्येव जाग्रत्पश्यति तानि सुप्तः" बृ० ४–३–१४ अत्रोदितेयंश्रुतिः। यद्यपि दृश्यत्वेन वाध्यत्वादस्या मिथ्यात्वं प्रतीयते। यत्र

यद्यपि दृश्यत्वेन वाध्यत्वादस्या मिथ्यात्वं प्रतीयते। यत्र दृश्यत्वं तत्र मिथ्यात्वमिति व्याप्तेर्निवाधत्वेन प्रवृत्तत्वात्। तथापि जागरित सृष्टेर्वाध्यत्वेऽपि तत्वसाक्षात्कारात्पूर्वमनुवृत्तेः यथा सत्यत्वन्तथा स्वप्नसृष्टेरपि तन्निर्विवादम्। स्वप्नजागरितयोः समानन्यायतादर्शनात्। अतः संध्ये सृष्टिः सत्येति तस्याः तथ्यत्वेतद् विशिष्टस्यात्मनोऽशुद्धेर्न तत्त्वमित्यादिमहावाक्यार्थान्वयित्वमिति मिति चेदाह "मायामात्रं तु कात्स्र्न्येनानभिव्यक्तस्वरूपत्वात्" अ० ३ पा० २ सू० ३ संध्ये सृष्टिः पारमार्थिकीति यदुक्तं तन्न संगच्छते सा सृष्टिर्मायामात्रम्मायैवाविद्यैवास्ति न हि तत्र परमार्थगन्धलेशोऽपि। अस्मिन् सूत्रे तु शब्दस्तु पूर्वपक्षं सृष्टेः सत्यत्वस्य प्रतिपादनरूपं पूर्वपक्षं क्षपयितुमस्ति, यत् कात्स्र्न्येनानभिव्यक्तरूपत्वात्तस्याः सृष्टेः स्वप्नोऽभिव्यक्तस्वरूपः कृत्स्नतया परमार्थवस्तुधर्मेण योग्यदेशकालनिमित्तसाहित्यरूपेण कथंचिदपि नास्ति। पूर्वश्रुतियुक्तिभ्यां तस्य सत्यत्वमुपपादनमतोऽसंगतं प्रतिभाति।

कात्स्र्न्यं चात्रदेशस्य, कालस्य, निमित्तस्य च, सम्पत्तिः, सम्प्राप्तिः वाधाभावश्चेत्यात्मक मभिप्रेतमस्ति। स्वप्ने परमार्थवस्तुविषयकाणि देशकालनिमित्तानि वाधनाभावश्च सम्भवितुं कथमपि नार्हति। योग्यदेशाभावः स्वप्ने प्रदर्श्यते, स्वप्ने समुचितो देशः रथादीनां न सम्भवितुमर्हः। संवृते स्वल्पे देहदेशे रथादयोऽवकाशं लब्धुं कथमर्हति न कथंचिदपि। यत्र स्वप्नो दृश्यते स एव रथादीनां योग्यदेशो भवेत्, सच न देहान्तर्गतः पूर्वयुक्त्या न नु देहाद् वहिः स्वप्नधीः भवति। स्वप्नं पश्यति सति देशान्तरितस्य द्रव्यस्य ग्रहणात् अन्यथा देशव्यवहितं न गृह्येत। अन्यथादेशव्यवहितं तु न गृह्यते। वहिर्देहात्स्वप्नदर्शने श्रुतिरपिप्रमाणम् "वहिष्कुला योदमृतश्चरित्वा स ईयतेऽअमृतो यत्र कामम्" वृ० ४-३-१२ इति

देहाद् वहिर्भूत्वाऽमृतः सन् चरित्वाऽमृतः सन् यथाकाममेतीत्यर्थः। किं च स्थितौ गतौ प्रत्यये च भेदो दृश्यते। देहादनिष्क्रांते जंतौ सामंजस्यंन स्यादिति चेन्न सुप्तस्य जन्तोः क्षणमात्रेण योजनशतांतरितदेशं पयतुं विपर्येतुं च सामर्थ्यन्न संभावनीयम् कथमपि। अतो देहाद् वहिः स्वप्न इति निर्मूलम्। किं च स्वप्नद्रष्टा पार्श्वस्थान् जनान् प्रवुद्धः सन् स्वीयं स्वप्नं प्रत्यागमनरहितं श्रावयति। अहमद्य कुरुदेशेपु शयानः निद्राविष्टः स्वप्ने पंचालानभिगतवान् इह च प्रवुद्धः अतो न देहाद् वहिर्भूत्वा स्वप्नधीः भवति। यदि देहादयं पृथग्भवेत् पंचालेष्वेव प्रति वुध्येत तत्रगतः कुरुष्वेव प्रतिवुध्येत तत्राभिगतः। अतो देहान्तर्गतस्यैव स्वप्नः। अपि च यदि अनेन देहेनायं देशांतरं गत। इति मन्यते तदाऽन्ये समीपस्थास्तं शयनदेशे न पश्येयुः। अतो देशान्तरं गतस्य न स्वप्नः। यथा भूतानि देशान्तराणि स्वप्नेऽयं पश्यति न तानि तथाभूतान्येव भवन्ति। यदि देहाद्देशान्तरं गच्छन् स्वप्नं पश्येत्तदा जाग्रतिवस्तुभूतं वस्तु समाकलयेत्, परिचिनुयाज जानीयाद् वा यतो नेदं संपद्यतेऽतोऽन्तरेव देहस्य स्वप्न इत्युपपन्नम्। श्रुतिरप्याहैतदर्थम्। "स यत्रैत्तत्स्वप्ने यथा चरति" वृ० २-१-१८ इत्युपक्रम्य "स्वेशरीरे यथाकामं परिवर्तते" इति। ननु यदि स्वप्नो देहान्तरेव भवेत् कथं तर्हि पूर्वोक्तवहिष्कुलाय श्रुतिः संगच्छेतेति चेदुच्यते तदीयोप पत्तिविरोधस्य परिहाराय साश्रुतिर्गौणीति वाच्यम्। वहिरिव कुलायाद मृतश्चरित्वेति रीत्येव शब्दं प्रयुज्यसा व्याख्येया। शरीरे वसतो वहिरिवेत्युक्तिर्न समीचीनेति तु न वाच्यम्। उपचारो हि निमित्तपूर्वको भवति। तथाहि यः शरीरे वसन्नपि तेन प्रयोजनन्न करोति वहिरिव स शरीराद् भवति। स्थितिगतिप्रत्ययभेदेस्य निर्वाहाय स्वप्नो वहिरित्यपि न वाच्यम् यतः स

भदोऽपि विप्रलम्भः विभ्रम एवेति मन्तव्यम्। यतः श्रुति-युक्तिभ्यामन्तरेव स्वप्न इति सिद्धान्तो व्यवस्थितः। स्वप्नस्य योग्यदेशासंबंधमुक्त्वाऽधुनाताद्दशकालायोगं वक्ति। स्वप्ने यदारजन्यां सुप्तो भवति; तदा भारतेवर्षे तु न वासरमिति मन्यते किन्तु निशैवास्ति न तु केतुमालादौ वर्षान्तरे तत्र निशासमयेऽपि वासरोभवति, कथमिदमुत्पद्यते। किञ्च मुहूर्त्तमात्रवर्तिनिस्वप्ने कदाचिद् बहुवर्षसमूहपरिमितं समयं यापयति अतः कालविसंवादोऽपि स्वप्नस्य स्पष्ट एव प्रतिभाति सति स्वप्नस्य सत्यत्वेऽङ्गीकृते। तथात्वे स्वीकृते योग्य निमित्तायोगोऽपि प्रदर्श्यते। स्वप्ने निमित्तान्यपि यथावत्कर्म कर्त्तुं च यथोचितमर्थं यथार्थं बोद्धुं नोचितानि सम्पद्यन्ते, इन्द्रियेषूपसंहृतेषु स्वप्नद्रष्टुः रथादिग्रहणाय चक्षुरादीनि न प्रवर्तन्ते। रथादि निर्वृत्तावपि चास्य निमिष-मात्रेण सामर्थ्यं कथं स्यात्। काष्ठानि च तत्साधनानि कथं भवेयुः। यथात्वे (सत्यत्वे) ऽबाधासम्भवोऽपि दृश्यते बाधि-तत्वात्। यतः स्वप्नद्रष्टा रथादयः पदार्थाः प्रबोधे सर्वथा बाधिताः सन्तीति प्रत्यक्षं दृश्यतेऽपि च स्वप्नेऽपि चैते स्पष्टं बाधिताः सन्ति। आदावन्ते च व्यभिचारस्य दर्शनात्। स्वप्ने कदाचित्कश्चिदर्थः यथा रथोऽयमिति निर्धारितः क्षणेन मनुष्यः सम्पद्यते मनुष्योऽयमिति निर्धारितः वृक्षोमिषेणावलो-क्यते इति स्वप्ने रथादीनां बाध्यतास्फुटमनुभूयते। अपि च रथादीनां स्वप्नेऽभावः श्रुत्याऽपि बोधितः "नतत्र रथाः न रथयोगाः न पंथानो भवंति" बृ० ४–३–१० इत्यादि। अतः स्वप्नदर्शनं मायामात्रन्न तु कथंचिदपि सत्यमिति निर्विवादम्। ननु स्वप्नो यदि मायामात्रत्वेन मिथ्यात्मकः तर्हि तत्र परमार्थलेशाभावे तस्य शुभाशुभसूचकत्वन्न स्यात्। तदन्वय-व्यतिरेकाभ्यां ताद्दशश्रुतिभिश्च विरोधः सुकरः इति स्वप्नस्य

भाविनोः साध्वसाधुनोः फलयोः सूचकत्वे वचनानि दृश्यंते "यदा कर्मसु काम्येषुस्त्रियं स्वप्नेषु पश्यति। समृद्धि तत्र जानीयात्तत्र स्वप्ननिदर्शने" छां० ५-२-६ इत्यादिना स्वप्नस्य शुभफलसूचकत्वं प्रतिपाद्यते। "किं च पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हंति" ऐन० आर० ३-२-४-१७ इत्यादिभिः स्वप्नैर्द्रष्टुरचिरजीवित्वं बोध्यते। स्वप्नाध्यायविदोऽपि समाचक्षते—कुंजरारोहणादीनि स्वप्ने दृष्टानि धन्यानि खरयानादीनि दृष्टानि त्वधन्यानि भवन्ति मंत्रदेवताद्रव्य-विशेषनिमित्ताश्च केचित् स्वप्नाः सत्यार्थोपेता अपि भवन्ति। इति कृत्वा स्वप्नस्यार्थक्रियाकारित्वं दृश्यते। अतः विशिष्ट-मेतत्तु मन्यते इति चेदाह स्वप्नस्यार्थक्रियाकारित्वेऽपि परमार्थ-त्वाभावान्मिथ्यात्वमेव। सत्यार्थ सूचकत्वेऽपि अर्थात् क्वचित् सूच्यमानस्य वस्तुनः सत्यत्वेऽपि स्त्रीदर्शनादेः सूचकस्य मिथ्यात्वं निर्बाधमेव बाध्यमानत्वादसत्यत्वेन प्रतीयमानत्वात् चेति निर्णीतं स्वप्नस्य मायामात्रत्वेन मिथ्यात्मकत्वम्। सुप्तौ रथनिर्मातृत्वादीनां, प्रतिपादन पराणां वाक्यानां सर्वथा गौणत्वमनुसंधेयम् सुप्तः सन् निमित्तमात्रत्वेन रथादीन् सृजति अतः स एव कर्त्तेत्युच्यते न तु प्रत्यक्षतः तान्निर्माति। रथादिनिर्माणप्रतिभानिमित्तमोद भयादीनां दर्शनात्तन्निमित्तयोः पुण्यपापयोः तत्स्रष्टुः निमित्तत्वमवगंतव्यम्, यथा क्वचित् लोको वदति। लाङ्गलं गवादीनुद्वहति गवाद्युद्वोढृत्वं लांगलस्य गौणत्वं न तु मुख्यत्वं निमित्तमात्रत्वादेव तदुच्यते तद्वदिहापि ज्ञेयम्। यथा जाग्रतः सृष्टिनिर्मातृत्वं तथैव सुप्तस्यापि चेत् तदिष्टं भवेत्तदा सृष्टस्य रथादेः प्रबोधमात्रेण बाध्यत्वं न स्यात् यदि स्वप्नसृष्टिः पारमार्थिकी स्यात्। नाभीष्टाऽतो वास्तविकी स्वप्नसृष्टिः। आत्मनः स्वयं प्रकाशात्मकत्वेन तद् विवेकाय स्वप्न उक्तः। जागरितावस्थायां तु विषयेन्द्रियसंयोगात्तज्ज्ञान

सत्वाज् ज्योतिर्व्यतिकरत्वं सम्पद्यते। सुप्तौ यदि रथादि सृष्टिवचनानि श्रुत्यादिना तथ्यान्यंगीक्रियेरन् तदा तस्य स्वयं ज्योतिष्ट्वं निर्णेतुं न शक्येत। तत्र यथार्थ विशिष्ट ज्ञान प्रकाशाभावात्। अतस्तेषां वचनानां गौणत्वोपपादनपरत्वं बोध्यम्। ननु प्राज्ञः निर्माता आम्नायात् इत्यनुमानात् प्राज्ञमेनं निर्मातारमामनन्तीति वचनश्रवणात् प्राज्ञस्य सत्स्वरूपनिर्मातृत्वं सुप्रसिद्धमतोरथादि सृष्टिवचसां भाक्तत्वं (गौणत्वं) कथमुपपन्नमिति चेन्न हेत्वसिध्या द्वितीयश्रुत्या तस्य सृष्ट्यादेः जीव व्यापारप्रतिपादनपरत्वनिरूपणात्। तथा हि० वृ० ४-३-६ स्वयं विहत्य स्वयं निर्माय स्वेन भासास्वेन ज्योतिषा प्रस्वपिति अर्थात् स्वयमेव प्रथमदेहं ज्योतिषा स्वरूपचैतन्यात्मकेन प्रस्वपिति। एतेन तस्य जीवव्यापारनिरूपणत्व विशदं प्रतिभाति। तस्व तादृशव्यापारबोधन एव परत्वं ज्ञेयम् प्रागुक्तार्थसंकलनादिति भावः। काठकोपनिषद्यपि जीवस्य सुप्तिकर्तृत्वं श्रूयते। "य एव सुप्तेषु जागर्ति कामानाँ निर्माताऽयं जीव" एवेति स्फुटं संकीर्तनात्। वाक्यशेषेण तस्य ब्रह्मभावोपदेशनात्। "तदेव शुक्रं तद् ब्रह्म" अनेन जीवभावस्य व्यावर्त्यत्वेन कथनमस्ति तत्त्वमस्यादिमहावाक्यवत्। अतो ब्रह्मप्रकरणान्न विरुद्धन्तत्र। जीवभावमापन्नं ब्रह्मस्वकीया विद्यया स्वप्नोपादात् तद् भावं विनैव वा स्वाविद्यया तदधिष्ठात् वर्तत इति भावः। तस्यस्वप्नेऽपि प्राज्ञव्यवहारोन प्रतिषिद्धः सर्वेश्वरत्वात् सकलासु जाग्रदादि अवस्थासु अधिष्ठातृत्वसत्वात्। ननु स्वप्नसृष्टिः सत्या प्राज्ञकर्तृत्वादित्यनुमानात् कुतो न तस्यास्तत्वं स्यादिति न, किमात्मकं सत्यत्वंगृह्यते व्यावहारिकं पारमार्थिकं वा नाद्यं प्रत्यक्षविरोधेन हेतोर्बाधितत्वात्। न चान्त्यं दृष्टांताभवेन हेत्वाभासात्मकत्वाद् हेतोः। यतः व्यवहारे बाधाभाव एव पारमार्थिकता, प्राक्पक्षे सा तु नास्ति तददर्शनात् तत्र।

द्वितीयपक्षेऽपिआत्यंतिकं सत्यत्वं विपदादिसृष्टौ न दृश्यते तादृशसर्गस्य समस्तस्य प्रपंचस्य मायामात्रत्वेन मिथ्यात्मकत्वम् "तदन्यत्वमारम्भणशब्दादिभ्य" ब्र० सू० २-१-१४ इत्यनेन प्रतिपादनात्। नन्वेवं सति स्वप्नस्य जाग्रतश्च को विशेषः परस्परमिति चेदाह-ब्रह्मात्मत्वदर्शनादाकाशादिप्रपंचः अबाधितः व्यवहारे व्यवस्थितरूपश्च दृश्यते संध्याश्रयोऽयं स्वप्नसर्गप्रपंचः प्रतिदिनं बाधितः। वेदांतिनये सकलप्रपंचस्यैव मिथ्यात्वात् भवतीत्येतावानेव विशेषोद्वयोः। व्यवहारेऽपि स्वप्नस्य मिथ्यात्मकत्वं वक्तुं पृथक् कथनमिति भावः। ननु योग्यस्य कस्यचिन्निमित्तस्या भावात् स्वप्नस्य मिथ्यात्वमिति न युज्यते जीवसंकल्पस्य निमित्तत्वं कल्प्यते न तुअविद्याया अतः सत्यः सः यतः जीवेश्वरयोरंशांशिभावः सिद्ध एवाहं ब्रह्मास्मि, तत्त्वमसि, इत्यादिवचनैरित्थं च परमात्मनो जीवोंऽशः यथाऽग्नेःस्फुलिङ्गः। एवं च यथावह्निस्फुलिङ्गयोः प्रकाशनदहनसामर्थ्ये वर्तेते तद् वत् जीवेश्वरयोरपि ज्ञानैश्वर्यशक्ती समाने भवतः इत्थं च जीवैश्वर्यवशात् स्वप्नेरथादि सृष्टिः संकल्पपरिजनितास्तीति चेन्न। भवतुजीवेश्वरयोरंशाशिभावः परन्तु जीव ईश्वराद् विपरीतधर्मा प्रत्यक्षमेवैतदनुभूयतेऽनीश्वरत्व मसर्वज्ञत्वं च जीवस्य प्रत्यक्षत एव दृश्यतेऽतो न जीवस्य संकल्पमात्राद्रथादि सृष्टिरिति सुवचम्। नन्वेवं जीव ब्रह्मणोर्विरुद्ध धर्मत्वात्कथं तयोरैक्यम्। उच्यते तादृशे विरोधे भासमानेऽपि वस्तुतः तदभावात्। न भातुजीवे सर्वज्ञमीश्वरत्वं च परन्तु अविद्योपाधिवशात् विद्यमानपि तत्तिरोभूतं भवति। अतएव तस्य तत्र कदाचिदप्यनुपलम्भेऽपि न तदीयं सत्यत्वं बाधितं भवति। तिरोहितमपि ईश्वरधर्मत्वं, ध्यानविधिना ईश्वरं ध्यायतः प्रयतमानस्य मानवस्याविर्भवति, यदासः विधूतध्वांतकल्मष

भवति । यथातिमिरतिरोहिता, दृक्प्रकाशनशक्तिः भैषज्य-प्रभावात्तिरोधाननिराकरणात् सप्रकाशा सम्पद्यते एवमीश्वर-प्रसादादणिमा महिमा इत्यादि सिद्धि सम्पन्नस्य कस्यचिद् बोधपरायणस्येश्वर धर्मता संजायते किन्तु स्वभावस्तु न सकलानां प्राणिनामीश्वरधर्मताया विद्यते। ईश्वरादेव हेतु-भूतात् जीवस्य बंधः मोक्षश्च भवति। तमेवेश्वरं सर्वकलं सकला-कारहेतुभूतमाश्रित्य साधनविधानादेकत्वमिति निर्वाधम्। ननु हेतोरेकत्वे विभिन्नफलता न दृश्यते किंतु समानफलतैव यथाऽन्नादिना क्षुधानिवृत्तिः। एवमीश्वरादेकस्माद् हेतुभूताद् विरुद्धफले बंधमोक्षौ कथमुभावपि संभवतः इति तु न वाच्यम्। ईश्वररूपस्य कात्स्न्र्येन परिज्ञानाभावादेव बंधः जगत्, तदभावात्तु मोक्षः इत्यभिप्रायात्। श्रुतयोऽप्यत्रानुसंधेयाः। ज्ञात्वा देव सर्वपाशापहानिः। क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः। तस्याभि-ध्यानात्तृतीयदेहभेदे। विश्वैश्वर्यं केवल आप्तकामः। श्वेताश्व० १-११ इत्येतत्प्रभृतयः। आम्नायाः प्रमाणम्। अत्र श्रुतौ पूर्वार्धं तु निर्गुणज्ञानफलप्रतिपादकं ज्ञेयम्। अहं ब्रह्मास्मि अहमेव परमात्मेत्याकारे साक्षादनुभवे ईश्वरादभिन्नरूपेजाते दूरीकृतविषयविलासानां सकलविधपाशानामविद्यारागद्वेष-मोहानां जन्ममृत्युवंधनानामपक्षयो जायते। तत् क्षयात् क्लेशाः क्षीयन्ते ततः तत्कार्यभूतौ जन्ममृत्यू ध्वंसतामापद्येते इति पूर्वभागार्थः। ईश्वरस्य ध्यानात् साधकदेहे देहविशेषे सिद्धदेहे प्रवर्तमाने अणिमामहिमेत्याद्यं श्वर्यं सम्पद्यते। ततो निरतिशय-मैश्वर्यं प्रभुज्य विततसंताने निर्गुणज्ञाने आविर्भूतेऽद्वितीयो भवन् निरतिशयानन्दात्मा तिष्ठति। नन्वित्थं जीवब्राह्मणोरैक्ये कथं न जीवः सर्वज्ञानैश्वर्यप्रकाशसंम्पन्नः इति चेदुच्यते सज् ज्ञानानन्दप्रकाशतिरोभावः देहसंवंधात् इन्द्रियमनो बुद्धिविषय-दुःखादियोगात्संजायतेऽतः पारमार्थिक प्रतिवंधस्याभावः युक्त

एव देहश्चोभयविधोऽपि ग्राह्यः स्थूलः सूक्ष्मश्च तस्य तथात्वात् । शरीर मेवोपाधिर्वाच्यः यथा महा काशे घटाकाशो मठाकाशः इति व्यवह्रियते तदुपाधिर्निमुक्तं शुद्धं महदाकाशमेकमेवैवं शरीरोपाधि-निर्मुक्तः ज्ञानद्वारा जीवः ब्रह्मसतत्वं प्राप्तो भवति । अत एव जीवो धारयन् देहम्मानवीयं यतते तस्य साक्षात्कारं वा तदभेदमवाप्तुकामः । तदर्थमेव तादृश वेदान्तवाक्यानां तदुपदेशपराणांसार्थक्यम् । श्रवणमनननिदिध्यासनपुरःसरमेव तद्धारणं तादृशतत्वबोधहेतुभूतम् । दहनप्रकाशन-सामर्थ्यसम्पन्नस्यापि वह्नेः सत्वेऽरणिगतस्य न तदुभयसामर्थ्यं दृश्यते तद्द्वयस्य तिरोहितत्वात् । भस्माच्छन्नस्याःप्यग्नेः तदभाववत्वं दृश्यते प्रकृतेऽपि तादृशोपाधिसमेते देहे तत्तिरस्कारो भवति। यथा मेघावृते गगने भानौ मन्दप्रकाशे हीनतेजसि वा सति न सूर्यस्य नाशोऽभावो वा भवितुमर्हति । तथा प्रकृतेऽपि बोध्यम् । चैतन्यांशेन जीव ब्रह्मणोरेकता सुवचा । घटस्यैकस्य वारि यदि विभिन्नेषु स्वर्णरजतादिनिर्मितेषु पात्रेषु निधीयेत नहि तदा तद् वारिणि भेदः स्तोकतरोऽपि तत् प्राकृतगुणकृतः लब्धुं शक्यते तदैक्यात् । एवमिहापि तदंशेनैक्यं जीवब्रह्मणोः सुतराम् संपन्नम् विद्यते । उपाधेः प्रागुक्तस्य वशात्तु सर्वज्ञत्वादिहानिः सुदृशा। नामरूपकृतस्य देहाद्यु-पाधेः संबधाज् जीवस्य तदविवेक-जनितभ्रमकृतः ज्ञानस्यैश्वर्यस्य च तिरोभावः स्फुटः प्रतीयते। ननु जीव ईश्वराद् भिन्नः तिरस्कृतज्ञानैश्वर्यवत्वादित्यनुमानेन जीव ईश्वरात् पृथगेव किन्न कल्प्यते किमर्थं देहसम्बन्धः कल्प्यतामिति चेन्न । जीवस्येश्वरादन्यत्वं प्रमाणान्तरेण श्रुतिरूपेण बाधितमस्ति । तथा हि "सेयंदेवतैक्षत" छा० ६-३-२ इत्यारभ्य अनेन जीवेनानुप्रविश्य इत्यत्रत्यात्म शब्देन जीवस्येश्वराभिन्नता प्रतिपादिता । किञ्च 'तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" छा० ६-९-४ इति च जीवायेश्वरात्मत्वो-

पदेशपरम। अतः तिरोहित ज्ञानैश्वर्यवान् जीवः देहसम्बन्धात् भवति। ईश्वरात्तु अनन्य एवेति फलितम्। इत्थं च स्वप्ने जीवस्य सांकल्पिकी सृष्टिः रथादिनां न भवितुमर्हति किन्तुतत्र जाग्रद् दशायां संस्कारजन्यस्य सविषयस्य प्रत्ययस्यैव हेतुत्वं वाच्यम् सुकृतदुष्कृतयोनिमित्तताऽधिगमात्। चेत्सांकल्पिकी सा स्यात्तदाऽनिष्टं कश्चिदपि स्वप्नं न पश्येत् सर्वस्याप्यनिष्ट-स्यानपेक्षितत्वेन संकल्पस्य तादृशस्य कथमप्यनुदयात्। इत्थं च आत्मनः स्वयंज्योतिष्ट्वसत्वात् स्वप्ने रथादिसृष्टिः मिथ्या वर्तते। मायामात्रेण स्वप्नस्य निर्मितत्वं निर्विवादम्। इति वेदान्तदर्शनीय तृतीयाध्यायस्य द्वितीयपादे वर्णितं स्वप्नरूपं सिद्धान्तभूतं भासते॥ इति॥

इदमन्यदपि स्वप्नविषये वेदनीयम्।

स्वप्नश्च मनसः सृष्टिः। मनश्च आत्मनः शक्त्या प्रदत्तं प्रभुत्वं प्रपन्नं सत् स्ववृत्तीः वर्तयति तत्र तत्र विषयेषु स्वप्नस्थानः तैजस इत्यभिज्ञां भजमानो द्वितीयः पादः आत्मनः ख्यायते। तदुक्तं माण्डूक्योपनिषदि। जागृति शयन सुषुप्ति तुरीया इमा अवस्थाः चतस्रोऽनुसृत्यात्मनश्चत्वारः पादाः सन्ति। "सर्वं ह्येतद् ब्रह्मायमात्मा ब्रह्मसोऽयमात्मा चतुष्पात्" अक्षराख्यमोंकार प्रतिपाद्यं परं ब्रह्म सर्वं सर्वगुणपूर्णमस्ति। पूर्णमदः पूर्णमिदमित्यादिश्रुतिषु प्रसिद्धेः। चतुर्मुखप्रभृतीनां प्रत्यगात्मनां नियन्तुः कस्यचित् पूर्णत्वत्रिकालातीतत्वयो स्वीकर्त्तव्यत्वादाह सोऽयमात्मा ब्रह्मैवास्ति। प्रणवांशाकारो-कारमकारनादप्रतिपाद्याः विश्व तैजस प्राज्ञ शिवरूपाद्वैत संज्ञकाः यथाक्रममात्मनश्चत्वारः पादाः (अंशाः) विद्यंते। तेषाम्मध्ये जागृत्यामवस्थायां प्रथमः पादः विश्वः वा वैश्वानर इत्याख्यायते। तदुक्तं माण्डूक्योपनिषदि "जागरितस्थानो-वहिष्प्रज्ञः स्थूलभुग्वैश्वानरः प्रथमः पादः"। जागरितम-

क्ष्यादिरूपं स्थानं यस्यास्ति चक्षुः स्थानः सः। अक्षिपदेनेन्द्रियाणि पञ्चापि गृह्यन्ते। वहिष्प्रज्ञः, वहिष्ठं वस्तुजातं ज्ञापयति। स्थूलभुक्, स्थूलान् वाह्यान् विषयान् जीवेन्द्रियद्वारा भुंक्ते। वैश्वानरः विश्यते ज्ञानेन प्रविश्यते स ज्ञानविषयीभूतः स्थूलः विश्वपदवाच्यार्थः स एव वैश्वः स चासौ नरः वैश्वानरः अर्थाद् भोक्तृत्वेन सम्वन्धी, विश्वः। अयं प्रथमः पादः। अथ स्वप्नस्थानक आत्मनो द्वितीयः पादो निरूप्यते, तैजस इत्यभिधां दधानः। "स्वप्नस्थानोऽन्तः प्रज्ञः प्रविविक्तभुक् तैजसः द्वितीयः पादः" मा० उ०। स्वप्नः, मनसः सृष्टिरूपं स्थानं यस्यासौ स्वप्नस्थानः। अन्तः प्रज्ञः वासनामयानन्तः स्थितपदार्थान् प्रकर्षेण ज्ञापयति जानाति च सः अन्तःप्रज्ञः। प्रविविक्तभुक्, जागृतौ पदार्थानुभवजन्यवासना जनकत्वेन स्वप्नस्थितं वस्तु जागृतिपदार्थविलक्षणमतः प्रविक्तभुगुच्यते। तद् भुक्ते अर्थात्तदनुभवभोगवान् तैजस इत्याख्या सम्पन्नः द्वितीयः पादः। विश्वतैजसयोः स्थानं निरूप्य प्राज्ञस्य तृतीयपादस्य स्थानं सुषुप्तिस्थान प्रदर्श्यते। "यत्र सुप्तो न कश्चन काम कामयते न कश्चन स्वप्न पश्यति तत्सुषुप्तम्। सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः"। मा० उ०। यस्यामवस्थायां शयानः सन् अज्ञानावृत्त मनस इन्द्रियाणाँ चोपरतत्वान्न कमपि काम्यमानमर्थमिच्छति न कश्चित् स्वप्नपदार्थं पश्यति तत्स्थानं सुषुप्तमिति कथ्यते। सुषुप्तमेव स्थान यस्य स सुषुप्तस्थानः शून्यः हृदयाकाशरूपः। एकीभूतः प्रत्यहं विश्वतैजसाभ्यामेकीभावमापद्यते। अत एकीभूतस्ताभ्यामित्युच्यते। प्रज्ञानघनः प्रज्ञापितो घनो जीवो येन स प्रज्ञानघनः। अर्थात्सुषुप्तिकाले घनं जीवं प्रज्ञापयति जानाति च सः। आनन्दमय आनन्दप्रचुरः पूर्णानन्दः। आनन्द-

भुक्, विषयभोगं विनापि अभिव्यक्तं केवलस्वरुपभूतमानन्दं भुंक्ते इत्यर्थः । तेन विश्वतैजसयोर्निवृत्तिर्जाता । तयोः स्थूलान्तरीय विषयभोगेनःनन्दोत्पत्तेः प्रतिपादनात्। चेतोमुखः विशेषानन्तशक्तिभ्यामुपपन्नः । ज्ञान स्वरूपः। मुखपदेन सर्वे अवयवा लक्ष्यन्ते । ज्ञानरूपसर्वावियव इत्यर्थः। ईदृशः प्राज्ञ-नामा आत्मनस्तृतीयः पादः सुषुप्तिस्थानोऽस्ति। पुनरप्यु-च्यते पूर्वोक्तमात्मनः पादत्रयरूपं दृढीकर्तुम् ।

वहिष्प्रज्ञो विभुर्विश्वो ह्यन्तः प्रज्ञस्तु तैजसः ।
धनप्रज्ञस्तया प्राज्ञ एक एव त्रिधामतः ।। मा० उ०।
विश्वो हि स्थूलभुग् नित्यं तैजसः प्रविविक्तभुक् ।
आनन्दभुक् तथा प्राज्ञस्त्रिधा भोगं निवोधत ।। मा० उ०।

आत्मनः पादत्रये व्याख्याते साम्प्रतं तुरीयाख्यः चतुर्थः पादो निरूप्यते। नान्तः प्रज्ञं न वहिष्प्रज्ञं नोभयतः प्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम्। अदृष्टमव्यवहार्यमग्राह्यमलक्षण-मचिन्त्यमव्यपदेश्यमैकात्म्य प्रत्ययसारं प्रपंचोपशममद्वैतं चतुर्थं मन्यंते स आत्मा स विज्ञेयः। मा० उ०।

नान्तः प्रज्ञम्, देहान्तः स्थिताः ये स्वाप्नपदार्थाः तान् न प्रज्ञापयति स नान्तः प्रज्ञः तमर्थात् स्वप्नावस्थाया अकर्तारम्। न वहिः प्रज्ञम्, देहाद् वहिः स्थिता ये पदार्थाः जाग्रत्का लीनाः तान् न प्रज्ञापयति इति न वहिष्प्रज्ञः तम्। जाग्रदवस्थाया अकर्तारम्। नोभयतः प्रज्ञम्, वहिः शब्दा-दिकमन्तश्च न पश्यति। यस्यां कस्यांचिदवस्थायामुभय ज्ञान-शब्दवाच्यायामपि न प्रज्ञापयति तन्नोभयतः प्रज्ञम्। अर्थादी दृश्या अवस्थायाः प्रवर्तकौ विश्वतैजसौ इत्यर्थः। न प्रज्ञानघनम्, घनपदेनाज्ञानावृतो जीवः तस्य या सुषुप्ति रवस्था तस्या अकर्तारम्। न प्रज्ञम्, प्रज्ञाशब्देन सम्प्रज्ञातसमाधेरवस्था गृह्यते तस्या ज्ञानं यस्मान्न भवति असौ न प्रज्ञः तम् न प्रज्ञम्।

सम्प्रज्ञातसमाध्यवस्थाया अकर्तारम् । नाप्रज्ञम्, चरमदेहमुत्सृज्य मुक्तिं गच्छताम् कृतेऽज्ञानप्रदो न भवति इति नाप्रज्ञः तम् नाप्रज्ञम् । अदृष्टम्, मुख्यप्राणानुग्रहाभावेनामुक्तो यः तेनादृश्यमानत्वाददृष्टः तम् अदृष्टम् । अव्यवहार्यम्, मुक्तिं विनासंसारे ग्रहणादि व्यवहाराविषयत्वादव्यवहार्थः तम् अव्यवहार्यम् । अत एवाग्राह्यम्, ग्रहणाभाववन्तम् ।अलक्षणम्, विश्वादित्रयवत् जाग्रदादि अवस्थात्रयप्रवर्तकस्वरूपानुमापक धर्मशून्यत्वादलक्षणम् । अचिन्त्यम्, अनुमापकधर्मशून्यत्वादेवानुमितिरूप चिन्तनविषयो न भवति इति अचिन्त्यः तम् अचिन्त्यम् । अव्यपदेश्यम् अचिन्त्यत्वादेव व्यपदेष्टुमशक्यत्वादव्यपदेश्यस्तमव्यपदेश्यम् । ऐकात्म्यप्रत्ययसारम्, प्रधानः पूर्ण एकश्चासावात्मा एकात्मा स एवैकात्म्यम् । प्रत्यय आनन्दरूपः सारः प्रत्ययसारः । ऐकात्म्यं चासौ प्रत्ययसारः तम् ऐकात्म्यप्रत्ययसारम् । प्रपञ्चोपशमम्, गुणादिभिर्विस्तृतत्वात् प्रपञ्चः उप-उत्कृष्टः शम आनन्दरूपः तम् प्रपञ्चोपशमम् । यद्वा प्रपञ्चस्य देहस्य सम्बन्धस्य उप शमः नाशोयस्माद् भवत्यसौ प्रपञ्चोपशमस्तम् प्रपञ्चोपशमम् । शिवम्, निर्दुःखरूपत्वात् शिवस्तम् । अद्वैतम्, अन्यथा प्रत्ययरूपं द्वैतं शमयति अन्यथाप्रत्ययाकारणम् । एतादृशं चतुर्थमात्मनः पादं मन्यन्ते औपनिषदाः। सोऽयमात्मा चतुष्पादस्ति सएवविशेषेण मुमुक्षुभिर्ज्ञेयः । तुरीयस्य विश्वादिभ्यस्त्रिभ्यो वैधर्म्यमुक्तम् । तदेव दृढयति ।

कार्यकारण बद्धौता विष्येते विश्वतैजसौ ।
प्राज्ञः कारणवद्धस्तु द्वौ तौ तुर्येन सिध्यतः ॥मा० उ०॥

विश्वतैजसौ कार्यकारण वद्धौ स्तः ।कार्यं भ्रमः, कारणमविद्या । आभ्यां यथाक्रमं वद्धौ । प्राज्ञस्तु कारणरूपेणैकेन वंधनेन संयुतः । तुरीये कार्यकारणरूपौ द्वावपि वंधौ न स्तः किन्तु स सर्वदृगस्ति । तुरीयं पादं विशेषयितुं न प्रज्ञमिति

विशेषणं व्याख्यातुमुक्तम्यत् सम्प्रज्ञात समाध्यवस्थाया अकर्तारम् इति। तत्र सम्प्रज्ञातसमाधेः स्वरुपमवश्यं वर्णनीयम् अन्यथा न प्रज्ञमिति विशेषणं स्पष्टार्थकं न भवतीति कृत्वा तत्प्रदश्यते।

योगदर्शने तत्स्वरूपमित्थं प्रकाशितम्।

वितर्क विचारानन्दास्मितानुगमात्संप्रज्ञातः।यो० द० पा०१ सू० १७। एषां चतुर्णां वितर्कादीनां पदार्थानां सम्बन्धेन युक्तायाः चित्तवृत्तेः समाधानमेव संप्रज्ञातयोगः कथ्यते। चित्तवृत्तिनिरोध रूपस्य निर्वीजयोगस्य स्वरूपं बोधयितुं पूर्वं तस्य पूर्वस्या अवस्थायाःसंप्रज्ञातयोगनाम्ना आख्याताया: तदीयावयवान्तर भेद पुरस्सरं वर्णनमत्र सूत्रे पतंजलिना प्रदर्शितम्। तथा हि संप्रज्ञातयोगस्य विमर्शनीयाः पदार्थाः त्रयः संति। (१) ग्राह्य। (२) ग्रहण (३) ग्रहीता। ग्राह्यम्, ग्रहणयोग्यम्। तच्च वस्तु, इन्द्रियाणां पञ्चानामपि स्थूलाः सूक्ष्माश्च विषयाः। ग्रहणन्तु ग्रहणसाधनम् तच्च इन्द्रियाणि, अन्तःकरणं च। ग्रहीता, ग्रहणकर्ता स च वुद्धया सममेकरूपतां प्राप्तः पुरुषः। यदा ग्रहणीयपदार्थानां स्थूलरूपे समाधिर्विधीयते तदा समाधौ यावत् शब्द अर्थ ज्ञानानां त्रयाणां विकल्पो वर्तते तावत् स सवितर्कः समाधिस्तिष्ठति। यदा एषां विकल्पो निवर्तते तदा स एव निर्वितर्क इत्यभिधीयते। यदा ग्राह्यग्रहणयोः सूक्ष्मरूपे समाधिर्विधीयते तदा तस्मिन् समाधौ यावत् शब्दार्थज्ञानानां त्रयाणां विकल्पो विद्यते तावत् स सविचारः समाधिरिति कथ्यते। तेषां विकल्पाभावे सति तु स एव निर्विचारः समाधिरुच्यते। यदा निर्विचारे समाधौ विचारसम्बन्धस्यासत्वे आनन्दानुभवस्य च अहङ्कारस्य सम्बन्धोऽवशिष्यते। तावत्स आनन्दानुगतः समाधिरित्याख्येयः। यदा तत्रानन्दप्रतीतिरपि लुप्यते। तदा स अस्मितानुगतः समाधिर्वोध्यः अयमेव सम्प्रज्ञातः

समाधिर्वा योगः कथ्यते । इतो ऽपि स्पष्टतरं स्वरूपं सम्प्रज्ञात-समाधेरग्रिमसूत्रे महर्षिणा स्पष्टीकृतम् । "क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थ तदञ्जनतासमापत्तिः । यो० द० पा० १ सू० ४१ । यस्य समस्ता वाह्या वृत्तयः क्षीयन्ते एवंभूतस्य स्फटिक मणेरिव निर्मलस्य चेतसः या ग्रहीतरि पुरुषे ग्रहणे—अन्तःकरणे, इन्द्रियेषु च ग्राह्ये–पञ्चभूतेषु च विषयेषु स्थितिः च तदाकारता एतद् द्वयमेव सम्प्रज्ञात समाधेर्लक्षणं लक्ष्यम् । इत्थं "न प्रज्ञ" मिति तुरीयपादस्य विशेषणं सुस्पष्टं व्याख्यातं जायते । एषु चतुर्षु आत्मनः पादेषु यः प्रथमः जागरितस्थानः विश्वाख्यः स वृहदाकारान् विविधप्रकारान् वाह्यान् स्थूलान् विषयान् प्रथितनिचयान् सकायान् भुंक्ते अत एव स स्थूलभुक् इत्युच्यते । तदीया स्थितिः वा स्वरूपं प्रत्यक्षतः स्पष्टमवबुध्यतेऽतस्तद् विषयकं वर्णनन्नावश्यकतामधिगच्छति । सुषुप्तिस्थानः तृतीयः प्राज्ञाभिधः पादस्तु सुषुप्तिकाले जीवमेव जानाति । प्राचुर्येण सर्वविधममन्दमानन्दं विषयभोगमनपेक्ष्य भुंक्ते । तस्य च मुखादयः समस्ता अवयवा ज्ञानरूपाः संति इति कृत्वा स चेतोमुखः इत्यभिधीयते । तत्र मनसः निखिलेन्द्रियाणां च गतिर्न प्रपत्तुं प्रभवति । पुरीतति नाड्यां वर्तमानेन मनसा सर्वविधस्यापि ज्ञानस्याजननं जागर्ति । मनः सन्निकर्षं विना इन्द्रियाणाँ स्वविषयान् ग्रहीतुं कथं गतिः प्रभवेत् । इयं सुषुप्तिरवस्था नितान्तस्तोकाकारा द्रष्टुस्तु दर्शनमात्र सत्तासारा श्रोतुश्च श्रवणमात्रसत्ताप्रकारा विहितस्वारस्य निकारा विस्मृत्या सह कृतयोगा अपगतसुखदुःखपद विभागा अविषया वर्तते । अतोहेतोः तद् विषयिका काचिदपि विवृतिः वर्णयितुं दुरूहा दुःशका च विद्यते । तुरीय आत्मनश्चतुर्थस्तु पादः शिवस्वरूपः ब्रह्मणो जीवस्य च द्वयोरपि अद्वैततां भजति ।

स च लौकिकीमवस्थां मर्यादां चातिक्रम्य वर्तते । ऐकात्म्य-विचारसारः न्यक्कृतमानसेन्द्रियविषयप्रकारः अद्वैतानुभव-प्रसारः तिष्ठति । तुर्यामवस्थामुपपन्नः साधकः जीवात्मपरमात्म-नोरधिष्ठितं चैतन्यमात्रमंशमधिश्रित्याद्वैततामनुभवन् प्रत्यगा-नन्दपरब्रह्मणि स्वस्वरूपाखण्डब्रह्मज्ञानेन स्वस्वरूपाखण्ड ब्रह्मणः साक्षात्कारेण च प्रत्यगानन्दपरब्रह्मणि लीनप्राणः अखिल बंधरहितः ब्रह्मनिष्ठः मुक्तावुत्तिष्ठमानः जीवन्मुक्तपद-भाग्भवति । संसारार्णवीयविविधविस्तृतकामनातरङ्गभंङ्गी-कृतशमचेतसां बहुविधेन्द्रियविषयासक्तान्तःकरणानां संसारिणां नराणां कृते तस्या अवस्थायाः का कथा कथनीय-तामर्हति । न कथं किंचिदपि । अतस्तुरीयपादस्यात्मनो लोकाद्भुतत्वात्तस्य वर्णना वैफल्यमेष्यति इति कृत्वावर्णनाद् हायते, स्वप्नस्थानो द्वितीयस्तु आत्मनः पादः तैजसाभिधः मनोरूपं स्थानमधितिष्ठति स च वासनामयान् पदार्थान् जानति च जाग्रत्पदार्थानुभवजन्यं स्वप्नस्थितं वस्तुजातं जाग्रत्पदार्थतो विलक्षणमत एव ततो विविक्तं भुंक्ते ।

तदा मनसः संयोगोमिद्धानाड्या समं भवति । इन्द्रियैस्तु सार्धं तदीयोऽसंयोगो जायते । अतएव प्रविविक्तभुक् इति विशेषणेन विशिष्टीक्रियते । स तु संस्कारमात्रेण वद्धः सन् प्रविरचिततनुरस्ति । तस्यामवस्थायां विषयाणामववोधे विभ्रान्तेः शान्तिर्न समुद्भवति । यतः स्वप्नविषयिका उक्तयोऽनेकविधप्रकृतयोऽनुपगतगतयो दृश्यंते । तत्रदृष्टानि अत्यल्पानि दृश्यानि वैचित्र्योपेतानि लक्ष्यंते । यानि च यथार्थ-प्रदर्शकानि । असीमतां गतानि तु तानि निरर्थकतामाश्रयंति । कानिचित् स्वतो विपरीतार्थगमकानि शुभसूचकानि । कानिचिद् दृश्यानि तु स्वविपरीतार्थगमकानिजायंते । असङ्गतानप्रकृतान् अचिन्तितानफलानव्यवस्थितस्वरूपानर्थान्स्वप्ता स्वप्ने पश्यति ।

तत्तु पूर्वं सविस्तरं प्रदर्शितम्। तत्र दृष्टिमिता विषया न कांचिद् व्यवस्थितिं वा निश्चितिमुपयान्ति। मायामात्र-निर्मितस्य मायात्मकस्य स्वप्नस्य रूपं च विषयोऽवोध एव प्रतिभाति। अवोधश्च ध्वान्तात्मको ज्ञानध्वंसकोऽतस्तदीयं-ध्वान्तं निवारयितुं वास्तविकं प्रकाशं च तत्रोपस्थापयितुं भावं च तद्गतं प्रदर्शयितुं विविधानाधारग्रन्थानधिश्रित्य स्वप्नस्य स्वरूपाणां भव्यभावानामभव्यभावानां च प्रदर्शनमत्र निरूपितम्। तद्वर्णना चावश्यकतां दधाति। स्वप्नश्च अस्थूलावस्थामवगाहते। असूक्ष्मेतरविषयको वर्वर्ति, इति कृत्वा मत्कृतोऽयं वन्धो गिरां, विवेकशालिनां कृते प्रामाणिक-तया स्पष्टतया च स्वविषयमवगमयितुं स्वप्नावस्थायां दृश्यानां भावानां विवेचनां परं पारयति। अतः स्वप्नविज्ञानमिति नामधेयं धत्ते।

इतिशम्।

# स्वप्नविज्ञानम्

## अशुद्धि शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृष्ठ | पंक्ति |
|---|---|---|---|
| ह्यकारण | नह्यकारण | १ | ४ |
| ह्रासों | ह्रासो: | १ | १३ |
| लब्घ | लब्धु | २ | ८ |
| याप्यातथ्येना | याथातथ्येना | २ | ११ |
| याथाथ्येन | याथार्थ्येन | २ | १४ |
| नामघेये | नामधेये | ३ | ४ |
| भिदघति | भिदधति | ४ | २३ |
| स्मतुं | स्मतुं | ५ | ७ |
| अर्हंति | अर्हंति | ५ | २५ |
| रनिमित्ता | निमित्ता | ५ | २६ |
| वोद्धभिच्छा | वोद्धुमिच्छा | ६ | २५ |
| पुगपदनेको | युगपदनेक | ७ | १ |
| हर्तंमशक्या | हतुंमशक्या | ७ | ५ |
| मनस | मनसो | ७ | ५ |
| इत्थ | इत्थं | ७ | १३ |
| विपर्थात्मकं | विपर्ययात्मकं | ११ | ३ |
| स्वर्णगिरि | स्वर्णगिरिं | ११ | ७ |
| तेल | तैल | १२ | ४ |
| सत्वावत् | सत्वात् | १३ | ८ |
| वासति | वसंति | १४ | १३ |
| प्रकृतिवः | प्रकृतिरेव | १५ | ५ |
| नानस्युप | नाभ्युप | १५ | १२ |

| अशुद्धम् | शुद्धम् | पृष्ठ | पंक्ति |
|---|---|---|---|
| कादम्वयः | कादम्वर्या | १६ | १ |
| वरुचे | रुचे | १६ | २० |
| प्रकृष्टतर्मं | प्रकृष्टतर्मं | १६ | १८ |
| साध्य | साध्यं | १६ | २० |
| रवेदश्रान्त | खेदश्रान्तौ | २२ | २३ |
| शंखलया | शृंखलया | २२ | २७ |
| वाधितवान् | भावितवान् | २३ | १० |
| दृष्टार्थे | दृष्टार्थं | २३ | २७ |
| पीडित | पीडितं | २४ | १६ |
| दष्ट्वा | दृष्ट्वा | २४ | ०६ |
| नाश | नाशं | ३३ | २४ |
| समग्रस्यका | समग्रस्यैका | ३४ | २ |
| दुरित | दुरितं | ३४ | ११ |
| महाकाली महालक्ष्मी महासरस्वती | महासरस्वती महालक्ष्मी महाकाली | ३४ | २० |
| भविनं | भाविनं | ३४ | २६ |
| हेतुकंरदृष्टि | दुरदृष्टहेतुकं | ३७ | १० |
| प्रसूतः | प्रसूतिः | ३७ | १४ |
| व्यापयति | ख्याति | ३७ | ५ |
| शातानीकः | शतानीकः | ३९ | ६ |
| स्मृत्वाऽग्रवदत् | स्मृत्वावदत् | ३९ | १७ |
| भाष्म | भीष्म | ४० | २ |
| सति | संति | ४१ | २० |
| न्तीद | न्तीदं | ४२ | ११ |
| वहन | वाहनं | ४२ | १८ |
| द्युत्तमा | द्यु त्तमा | ४३ | १३ |

| अशुद्धम् | शुद्धम् | पृष्ठ | पंक्ति |
|---|---|---|---|
| धारित्व | धारित्वं | ४४ | १४ |
| दिग्विभाग | दिग्विभागं | ४५ | ६ |
| मघुर | मधुर | ४५ | २५ |
| पान | पानं | ४७ | १२ |
| नवधकस्य | वधकस्य | ४८ | २० |
| मुत्कट | मुत्कटं | ४८ | २० |
| गुरुभ्यं | गुरुभ्य | ४६ | ५ |
| प्रकति | प्रकृति | ४६ | १३ |
| कालविदमि | कालविद्भिः | ४६ | २० |
| सन | सन् | ५० | १४ |
| आयुव | आयुर्वे | ५२ | ११ |
| सम्पदादन | सम्पादन | ५२ | २६ |
| महिंषि | महर्षि | ५३ | ११ |
| साध्य | संध्य | ५४ | ७ |
| ज्योतिसृवं | ज्योतिष्टुं | ५४ | ८ |
| रथत् | रर्थात् | ५५ | ६ |
| सष्टे | सृष्टे | ५६ | १७ |
| पयतुं | पर्येतुं | ५८ | ४ |
| भदोऽपि | भेदोऽपि | ५६ | १ |
| इत्यादिनां | इत्यादिना | ६० | ३ |
| ऐन | ऐत | ६० | ५ |
| मायाप्रात्र | मायामात्र | ६० | १५ |
| रर्थातत्वादीनां | रथादिनिर्मातृत्वादीनां | ६० | १५ |
| आन्नापात् | आम्नायात् | ६१ | ५ |
| तस्व | तस्य | ६१ | १३ |

| अशुद्धम् | शुद्धम् | पृष्ठ | पंक्ति |
|---|---|---|---|
| ताभवेन | ताभावेन | ६१ | २५ |
| विपदादि | वियदादि | ६२ | १ |
| देव | देवं | ६३ | १२ |
| रूपकतस्य | रूपकृतस्य | ६४ | १६ |
| काम स्वप्न | कामं स्वप्नं | ६६ | १७ |
| तया | तथा | ६७ | ६ |
| विशेषयितं | विशेषयितु | ६८ | २७ |
| स्वरूप | स्वरूपं | ६६ | ६ |
| कृतशम चेतसां | कृत चेतसां | ७१ | ६ |
| हायते | हीयते | ७१ | १३ |
| जानति | जानाति | ७१ | १४ |
| पूर्व | पूर्वं | ७२ | १ |

———

